# ॥ अष्टविकृतिविवृतिः ॥

( वेदाङ्गम् )

॥ मधुसूदनमुनिकृता ॥

---

सामगाचार्य्येण सामश्रमीतिलब्धोपनामकेन
श्रीसत्यव्रतभट्टाचार्य्येण
सप्रस्तारोदाहरणव्याख्यया समलङ्कृत्य प्रकाशिता

---

१८११ शकाब्दीय-श्रावणे

कलिकाता—सत्ययन्त्रे

( ९५ नं० आमहार्ष्ट ष्ट्रीट )

तदादेशेनैव भारतेऽत्र प्रथमं मुद्रिता ।

# ॥ अथ लुप्तकल्पवेदाङ्गम् ॥

( अष्टविकृतिविवृतिः )

ध्यायं ध्यायं विश्वरूपं स्मारं स्मारं गुरोर्गिरः ।
विकृतीर्बोधयत्यष्टौ श्रीसत्यव्रतः श्रोत्रियः ॥ १

अथाष्टविकृतिविवृतिं व्याख्यास्यामः ;—का नामाष्टौ विकृतयः ? यासां विवृतिरेषा कृता मधुसूदनमुनिनेति । सर्वेषा मेव ऋङ्लक्षणमन्त्राणा नेकादश पाठप्रकारा भवन्ति ; तत्र त्रयः प्रकृतिपाठाः श्रूयन्ते, अवशिष्टास्त्वष्टौ विकृतय इति ।

१—"आर्षी संहिता"—इति प्रथमा प्रकृतिः ; इय मेव निर्भुजसंहितेत्यप्युच्यते । "संहिता पदप्रकृतिः"— इत्यादीनि बह्वृक्प्रातिशाख्याद्युक्तानि तल्लक्षणानि द्रष्टव्यानि । "अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजम् । होतारंरत्नधातमम्"—इत्येव मविच्छिन्नपाठा एव तदुदारणानि । एवमादय आद्यप्रकृतिपाठास्तु ऋग्यजुःसामाथर्वाख्यचतुर्वेदश्रुतानामृग्यजुःसामलक्षणानां त्रिविधाना मेव मन्त्राणां भवन्ति ।

२—"पदसंहिता"— इति द्वितीया प्रकृतिः ; इयं खलु प्रतृणसंहितेत्यप्युच्यते । 'केवलं तु पदं स्थितम्"—इत्यादीनि बह्वृक्प्रातिशाख्याद्युक्तानि तल्लक्षणानि द्रष्टव्यानि । निर्भुजापरपर्यायार्षी संहितैवास्याः संहिताया आश्रय इत्यत एवास्या द्वितीयात्वम् । "अग्निम् । ईळे । पुरःऽहितम् । यज्ञस्य । देवम् । ऋत्विजम् । होतारम् । रत्नधाऽतमम् ॥"— इत्येवं विच्छिन्नपाठा एव तदुदाहरणानि । एवमादयो द्वितीयप्रकृतिपाठास्तु ऋग्यजुःसामाथर्वाख्यचतुर्वेदश्रुताना मृग्यजुर्लक्षणानां द्विविधाना मेव

मन्त्राणां भवन्ति ; साम्नान्तु स्वराश्रितत्वान्नास्त्येव हि तत्रार्थानुगतपदपाठसम्भवः ।

२ — "क्रमसंहिता" — इति तृतीया प्रकृतिः ; इय मपि प्रत्ययसंहितेत्यप्युच्यते । "क्रमो द्वाभ्या मभिक्रम्य प्रत्यादायोत्तरं द्वयोः । उत्तरेणोपसन्दध्यात् तथार्द्धर्चं समापयेत्" — इत्यादीनि बह्वृक्प्रातिशाख्याद्युक्तानि तल्लक्षणानि द्रष्टव्यानि । पदसंहितेवास्याः संहिताया आश्रय इत्यतएवास्यास्तृतीयात्वम् ।

"अग्नि मीळे । ईळे पुरोहितम् । पुरोहित मिति पुरःऽहितम् । पुरोहितं यज्ञस्य । यज्ञस्य देवम् । देव मृत्विजम् । ऋत्विज मित्यृत्विजम् ।" — इत्येवं क्रान्तद्विरावर्त्तितपाठा एव तदुदाहरणानि । एवमादयस्तृतीयप्रकृतिपाठास्तु ऋग्यजुःसामाथर्वाख्य चतुर्वेदश्रुताना मुक्तलक्षणमात्राणां भवन्ति ; अन्यत्रार्द्धर्चाभावात् ॥

इमं क्रम मेवावलम्ब्य जटाद्या अष्टौ विकृतयोऽधीयन्ते ; अतस्तासां सर्वासा मेव क्रमसंहितात्वेन तत एव प्रत्ययसंहितात्वेन च ग्रहण मिष्टं वेदविदुषाम् । जटालक्षणादिकान्तु महामुनिव्याडिकृतविकृतिवल्ल्यादौ निर्दुष्ट मेवोपदिष्टम् । ते विकृतिवल्ल्यादयस्तु ग्रन्था अतिप्राचीनाः प्रामाण्यपदवी मधिरूढाश्च ; परं तादृशग्रन्थानां सम्पूर्णादर्शस्यैकस्याप्यलाभावात् * आदावनतिप्राचीन मपि सम्पूर्णं विकृतिवल्ल्यादिमूलकत्वेन प्रमाणञ्च मधुसूदनमुनिकृत मष्टविकृतिविवृतिनाम ग्रन्थ मेवाद्य प्रकटयामः । क्रमात् तेषा मष्टविधाना मेव पाठानां सम्यग् बोधाय प्रस्तारानुदाहरणानि च स्फुटं दर्शयामः । तथाहि —

१ । जटापाठः — अग्निमीळे ईळेऽग्न मग्निमीळे । ईळे

---

* विकृतिवल्ल्याः सटीकाया जटापटलमात्र मस्माभिः पठितम् ।

पुरोहितं पुरोहितमीड़ ईड़े पुरोहितम्। पुरोहितंयज्ञस्य यज्ञस्य पुरोहितं पुरोहितंयज्ञस्य। पुरोहित मिति पुरःऽहितम्। यज्ञस्यदेवं देवंयज्ञस्य यज्ञस्यदेवम्। देवमृत्विज मृत्विजंदेवं देवमृत्विजम्। ऋत्विजमित्यृत्विजम्। अस्यायं प्रस्तारः — १-२, २-१, १-२; २-३, ३-२, २-३; ३-४, ४-३, ३-४; ४-५, ५-४, ४-५; ५-६, ६-५, ५-६। एव मावर्त्त्य त्रिः पठनेन जटानामाद्या क्रमविकृतिः सम्पद्यते।

२। मालापाठः — उदाहरणन्तु ३४ पृष्ठे द्रष्टव्यम्। अन्यत्रा-न्यत्रोक्तं लक्षणम् — "माला मालेव पुष्पाणां पदानां ग्रन्थिनी हि सा। आवर्त्तन्ते त्रयस्तस्यां क्रमवुत्क्रमसङ्क्रमाः"—इति। तस्यायं प्रस्तारः —१—२ ६-५, २-३, ५-४, ३-४; ४-३, ४-५ ३-२, ५-६ २-१ एव मावर्त्त्य पठनेन माला नाम द्वितीया क्रमविकृतिः सम्पद्यते।

३। शिखापाठः — अस्यायं प्रस्तारः — १-२, २-१, १-२; ३; २-३, ३-२ २-३; ४; ३-४ ४-३, ३-४; ५; ४-५, ५-४ ४-५; ६; ५-६, ६-५, ५-६। एव मावर्त्त्य पठनेन शिखा नाम तृतीया क्रमविकृतिः सम्पद्यते। उदाहरणन्तु ३५ पृष्ठे द्रष्टव्यम्।

४। "रेखापाठः" — श्रोतुनःश्रोतुरातिःसुश्रोतुःसुचेत्तासिन्धु-रद्भिः" — इत्येकस्या ऋचो (ऋ० सं० २. १. २. १.) द्वितीयो ऽर्द्धर्चःसंहितापाठः। "श्रोतु१। न २। श्रोतुऽरातिः३। सुऽ-श्रोतु.४। सुऽचेचा५। सिन्धुः६। अत्ऽभि ७।"—इत्येवं पदपाठः। तत्र "१, २; २, १; १—२; २, ३, ४; ४, ३, २; २—३, ३—४; ३, ४, ५, ६; ६, ५, ४, ३; ३—४ ४—५ ५—६;

४, ५, ६, ७ ; ७, ६. ५, ४ ; ४—५ ५—६. ६—७"—इत्येवं प्रस्तारानुसारेण द्वित्रिचतुःपदाना मावर्त्तितपठनेन रेखा नाम चतुर्थी क्रमविकृतिः सम्पद्यते । ३५ पृष्ठे रेखावृत्तौ प्रथमोदाहरणं द्रष्टव्यम् । सैषा पञ्चपदाना मप्यावर्त्तनेनापि भवितु मर्हति । तदेव ३६पृष्ठे रेखावृत्तौ "सुषे"—इत्यादि द्वितीयोदाहरणं द्रष्टव्यम् । "सुषेसावांवरुणमित्र"—इति चैकस्या ऋच आद्योंशः (ऋ० सं० २.१.२.२.) संहितापाठः । "सुषे[१] । सा[२] । वाम्[३] । वरुण[४] । मित्र[५]"—इत्येवं च तत्र पदपाठः । तत्र "१, २, ३, ४, ५ ; ५, ४, ३, २, १ ; १—२, २—३, ३—४, ४—५."—इत्येवं प्रस्तारानुसारेणादौ पदानां ततो विपर्यस्तपदानां ततः क्रान्तपदानां चैव मावर्त्तित पाठेनैव सम्पद्यते रेखेति ।

५ । ध्वजपाठः—प्रवःपान्तंरघुमन्यवोन्धोयज्ञंरुद्रायमीढुषे भरध्वम्"—इत्येकस्या ऋचः (ऋ० सं०२, १, १, १, )आद्योऽर्द्धर्चः संहितापाठोऽवगन्तव्यः । "प्र[१] । वः[२] । पान्तम्[३] । रघुमन्यवः[४] । अन्धः[५] । यज्ञम्[६] । रुद्राय[७] । मीढुषे[८] । भरध्वम्[९]"—इति चास्य पदपाठाः । अत्र च "२—३, ८—९, ३—४, ७—८, ४—५, ६—७ ; ५—६ ; ६—७, ४—५, ७—८, ३—४, ८—९, २—३"—इत्येवं प्रस्तारानुसारेणादितोऽन्ततश्चावर्त्त्य पठनेन ध्वजो नाम पञ्चमी क्रमविकृतिः सम्पद्यते । तादृशपाठोदाहरणन्तु ३६ पृष्ठे द्रष्टव्यम् ।

६ । दण्डपाठः—एतल्लक्षणं तु मधुसूदनेनास्फुट मेवोक्तम् (३७ पृ०) ; अतस्तद् व्यक्तं वर्णयामः, पूर्णोदाहरणञ्चाप्य दर्शयाम एकम् । तथाहि—"चतुर्भिर्दण्ड उच्यते"—इति अन्यत्रोक्तं

दण्डलक्षणम्। संहितापदक्रमजटाख्यैश्चतुर्भिर्यदाह तदा दण्डः प्रकारो भवतीति च तदर्थः। तथाचास्यैवं प्रस्तारो भवति—"संहिताद्यपादः। १, २। १—२। २—१, १—२। ३। २—३ ३—२, २—३ संहिताद्वितीयपादः। ४। ३—४। ४—३, ३—४। ५। ४—५। ५—४, ४—५। ६। ५—६। ६—५ ५—६। संहिता-तृतीयपादः। ७। ७, ८। ८—७, ७—८।" इति। तद्यथा—"अग्निमीडेपुरोहितम्[१]। अग्निम् ईडे[२]। अग्निमीडे[३]। ईडेग्नि नग्नि मीडे[४]।—। पुरःऽहितम्[२]। ईडे पुरोहितम्[३]। पुरोहित मीड इडे पुरोहितम्[४]। *। यज्ञस्यदेवमृत्विजम्[१]। यज्ञस्य[२]। पुरोहितं यज्ञस्य[३]। यज्ञस्य पुरोहितं पुरोहितं यज्ञस्य[४]; पुरोहित मिति पुरःऽहितम्। देवम्[२]। यज्ञस्य देवम्[३]। देवं यज्ञस्य यज्ञस्य देवम्[४]। ऋत्विजम्[२]। देव मृत्विजम्[३]। ऋत्विजं देवं देवमृत्विजम्[४]। *। होतारंरत्नधातमम्[१]। होतारम्[२]। होतारं रत्नधातमम्[३]। रत्नधातमं होतारं होतारं रत्नधातमम्[४]। रत्नधातम मिति रत्नऽधातमम्"—इति। इह १ = संहितापाठाः, २ = पदपाठाः, ३ = क्रमपाठाः, ४ = जटापाठाः ज्ञेयाः। सेयं दण्डो नाम षष्ठी क्रमविकृतिः।

७। रथपाठः—समयोरुभयोः ऋचोः, समयोरुभयोः पादयोर्वा सहैव रथपाठ इति विवेकः। अतएवोक्त मन्यत्रैवम्—"समे ऋचौ गृहीत्वा तु रथवच्चलति क्रमः। आवकं तं विजानीयात् चतुर्भिर्दण्ड उच्यते"—इति। आवक इति रथस्यैव नामान्तरम्। तद्यथा—"अग्निमीडेपुरोहितंयज्ञस्यदेवमृत्विजम्"—इत्येकस्या ऋचोऽर्द्धर्चः (ऋ० सं० १, १, १, १। "अयन्देवाय जन्मनेस्तोमोविप्रेभिरासया"—इत्यप्येकस्या ऋचोऽर्द्धर्चः (ऋ०

सं० १. २. १. १.) ताविमौ समानावर्द्धर्चौ सम्पुटीकृत्य क्रमात् संहितापदक्रमैः प्रायो दण्डवत्पाठेनैव रथपाठ सम्पद्यते। तद्यथा—अग्नीमीड़ेपुरोहितम्[१क] । अयन्देवाय जन्मने[१ख] । अग्निम, ईड़े[२क] । अयम् . देवाय[२ख] । ईड़ेऽग्निम[३क] देवायायम्[३ख] । पुरःऽहितम्[२क] । जन्मने[२ख] पुरोहितमीड़े[३क] । जन्मनेदेवाय[३ख] । यज्ञस्यदेवमृत्विजम्[१क] । स्तोमोविप्रेभिरासया[१ख] । यज्ञस्य[२क] । स्तोम[२ख] । यज्ञस्य पुरोहितम्[३क] ; पुरोहितमिति पुरःऽहितम् । स्तोमोजन्मने[३ख] । देवम[२क] विप्रेभिः[२ख] देवं यज्ञस्य[३क] । विप्रेभिः स्तोमः[३ख] । ऋत्विजम्[२क] । आसया[२ख] ऋत्विज देवम्[३क] । आसयाविप्रेभिः[३ख]—इति । इह १क, १ख = संहितापाठाः । २क. २ख = पदपाठाः । ३क, ३ख = जटामध्ये पाठ्या व्युत्क्रमपाठाः । सेयं रथो नाम सप्तमी क्रमविकृतिः ।

८। घनपाठः—"प्रवोपान्तं रघुमन्यवोन्धोयज्ञं रुद्रायमीढुषे भरध्वम्"—इत्येकस्या ऋचोऽर्द्धर्चः ( ऋ० स० २. १. १. १.) संहितापाठोऽवगन्तव्यः । "प्र[१] । वः[२] । पान्तम्[३] । रघुमन्यवः[४] । अन्धः[५] । यज्ञम्[६] । रुद्राय[७] । मीढुषे[८] । भरध्वम्[९]—इतीत्थं पदपाठे नव पदानि श्रूयन्ते । तत्र—"१ २, २ १. १ २ ; ३ २ १, १ २ ३ । २ ३, ३ २, २ ३, २ ३ ४ ; ४ ३ २, २ ३ ४ । ३ ४. ४ ३, ३ ४ ५ ; ५ ४ ३, ३ ४ ५ । ४ ५ ; ५ ४, ४ ५ ६ ; ६ ५ ४, ४ ५ ६ । ५ ६ ६ ५, ५ ६ ७ ; ७ ६ ५ ; ५ ६ ७ । ६ ७ ; ७ ६, ६ ७ ८ ; ८ ७ ६ , ६ ७ ८ ; ७ ८, ८ ७, ७ ८ ९ ; ९ ८ ७, ७ ८ ९ ८ ९ ९ ८, ८ ९ '—इत्येवं प्रस्तारानुसारेणावृत्त्य पठनेन घनो नाम अष्टमी क्रमविकृतिः सम्पद्यते । एतदुदाहरणं ३८ पृष्ठे द्रष्टव्यम् ॥

आसु चाष्टसु विकृतिषु जटादण्डयोरेव प्राधान्यम्। तत्र हि शिखा तु जटानुसारिण्येव ; माला रेखा ध्वजो रथश्च दण्डानुसारिण्य एव, घनो नाम विकृतिस्तूभयानुसारिणी। अत एव चरणव्यूहादौ क्रमपारः क्रमपदः, क्रमजटः, क्रमदण्डश्चेति चतुर्विध मेव पारायण मुक्तम्। तत्र "अथ चतुष्पारायणं यथा। क्रमपारः क्रमपदः क्रमजटः क्रमकण्डश्चेति चतुष्पारायणम्। क्रमशब्द उभयसंहितावाची। स कथम्? 'अनुलोमविलोमाभ्यां त्रिवारं हि पठेत् क्रमम्। विलोमे पदवत्सन्धिरनुलोमे यथाक्रमम्'। यथाक्रमं यथासंहित मित्यर्थः। अन्यच्च – वर्णक्रमः अक्षरसमाम्नाय एवेत्यारण्यके। 'कथ मभिष्टुयादित्यक्षरशः चतुरक्षरशः, पच्छः अर्धर्चशः, ऋक्शः'—इति ब्राह्मणम्। 'भूयांसि तु समाम्नानाद् व्यञ्जनमात्रन्तु तत्तस्याभिधानस्य भवति'—इति नैरुक्ताः। क्रमः संहितावाची कथम्? 'पदप्रकृतिः संहिता'—इति नैरुक्तवचनात्। 'क्रमपदः' क्रमः संहिता तस्याः पदानि। इति द्वे प्रकृतिपारायणे द्वे विकृतिरूपे। विकृतिरष्टविधा भवति। तत्र — जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः। अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः'—इति। आसां मध्ये जटादण्डयोः प्राधान्यम्। तत्कथम्?' जटानुसारिणी शिखा, दण्डानुसारिणी माला रेखा ध्वजो रथश्च। घनस्तु उभयानुसारिणी"—इति च तद्भाष्यम्। तदेवं तत्र क्रमपारशब्देन निर्भुजसंहितापरपर्याया आर्षी संहिता बोध्या ; क्रमपदशब्देन तु पदसंहितायाः क्रमसंहितायाश्चेत्युभयविधाया एव प्रतृणसंहिताया बोध इष्टः ; क्रमजटशब्देन तु जटाख्यविकृतेः तदनुसारिण्याः शिखा-

याश्च ग्रहण मिष्यते ; क्रमदण्डशब्देन तु दण्डाख्यविकृतेः तदनुसारिणीनां मालारेखाध्वजरथाना मवगमः स्वीकार्यः ; घनाख्यविकृतेस्तु जटादण्डयोरुभयोरेवान्तर्भावोऽभिमतश्चरणव्यूहकारादीनाम् ; तस्या उभयानुसारित्वात् । वेदनीतिमञ्जर्याम्, युवदीपिकायाञ्चान्यान्यविधानि किञ्चिद्विरुद्धानि चोक्तानि क्रमविवरणानि ; तानीह विस्तरभिया न प्रदर्शनीयानि ; वैदिकत्वकामैस्तु तत्र तत्रैव तानि तावद्द्रष्टव्यानीत्याख्याताास्तिस्रः प्रकृतयः अष्टौ च विकृतय इति सङ्कलनया एकादशपाठप्रकारा यत्र कुत्र वा स्थिताना मृग्लक्षणमन्त्राणा मिति दिक् ॥

तथायं लक्षणसङ्ग्रहः—

१—'संहिता पदप्रकृतिः' इत्यादि ब० प्रा० १प० ।

२—'केवलं तु पदं स्थितम्'—इत्यादि ब० प्रा० १०प० ।

३—'क्रमो द्वाभ्या मभिक्रम्य'—इत्यादि ब० प्रा० १०प० ।

४— द्विपदादिक्रमाः पञ्च'—इत्यादि ३ पृ० ।

५— ब्रूयात् क्रमविपर्यासात्'—इत्यादि २४ पृ० ।

६—'पदोत्तरां जटा मेव शिखा मार्याः प्रचक्षते'—इति ३५पृ० ।

७—'क्रमाद्वित्रिचतुःपञ्च'—इत्यादि ३५ पृ० ।

८— ब्रूयादादेः क्रमं सम्यक्'—इत्यादि ३६ पृ० ।

९—क्रम मुक्त्वा विपर्यस्य'—इत्यादि ३७ पृ० ।

१०—'पादशोऽर्द्धशो वापि सहोक्त्या दण्डवद्रथः'—इति ३७ पृ० ।

११—'जटा मुक्त्वा विपर्यस्य घन माहुर्मनीषिणः'—इति ३८पृ० ॥

# ॥ अष्टविकृतिविवृतिः ॥

अथ मधुसूदनमहामतिः स्वचिकीर्षितस्य निष्प्रत्यूहपरिसमापनफलक मिष्टदेवताध्यानरूपं मङ्गल माचरन्, स्वगुरुस्वनामकथनपूर्वकं स्वचिकीर्षितं प्रतिजानीते —

श्रीमन्तौ श्रीनृहरिचरणावात्मनो न्यस्य चेत-
स्यृग्वेदाष्टविकृतिविवृतिं वैदिकश्लोकनीयाम् ।
व्याड्याचार्यानुमतिर्मधुसंसूदनाख्यो गुरु-
श्रीकृष्णद्वैपायनतनूभवो मस्करी चर्करीति ॥ १

गुरुभूतो यः कृष्णद्वैपायनः, तस्य तनूभवः तत्करजातत्वेन तत्कुमारइत्यभिहित इति यावत्। मधुसंसूदनाख्यः मधुसूदननामा मस्करी यतिः। श्रीमन्तौ जनाय देयत्वेन सकलसम्पत्तिमन्तावित्यर्थः। श्रीनृहरिचरणौ श्रीविशिष्टो नरहरिः तस्य चरणौ। आत्मनः स्वस्य चेतसि न्यस्य निधाय। वैदिकश्लोकनीयां वेदविद्याविचक्षणानां श्लोकनीयाम्। ऋग्वेदे ऋक्शाखायां प्रवृत्ता या अष्टौ विकृतयः जटामालाद्यष्टविकाराः, तासां लक्षणाना मिति यावत्। विवृतिं तदर्थविवरण मिति यावत्। व्याड्याचार्याणां जटादिलक्षणकर्तॄणा मनुमतिः सम्मतिर्यस्मिन् कर्मणि; तद्यथा भवति तथा। चर्करीति इतरेभ्योऽतिशयेन कारिकारूपेणेति शेषः; करोति अष्टविकृतिलक्षणार्थविवरणं कारिकानिर्माण मातनोतीत्यर्थः॥ १ ॥

स्वकृतेः श्लेषेण स्वाकृतिसाम्यं सूचयन्नेव वेदविशारदौ-पादेयता माशास्ते—

**महाकृतिरियं मम प्रकृतिनिर्मलाहारिणी सेविनाम् ।**
**सुधाविमतिकारिणीविशयहारिणीवेदविद्याविदाम् ॥२**

ग्रन्थपक्षे—ममेयं महती साकृतिश्च महाकृतिः ; तत्कृतोऽयं महाग्रन्थ इत्यर्थः । वेदविद्याविदां वेदतद्विकृतितल्लक्षणरूप-विद्याविशिष्टाना मित्यर्थः । मनोभुवि विहारिणी भवत्विति क्रियाकारकयोजना ; वेदवेत्तृभिरियं कृतिर्मनसा गृह्यता मित्यर्थः । महाकृति रित्यत्र महती आकृति रित्यपि लभ्यते, तत्पक्षे—ममेयं महती आकृतिः यथाकथञ्चित् कृतिकर्तुरपि कृपालुभिर्वेदवेत्तृभिर्मनसा वचसा प्रशस्यता मेवेत्यर्थः ॥ हयग्रीवनृसिंहादिकृतजटादिविकृतिलक्षणकृतिभिरेव चरिता-र्थात् न कृत्य मनया कृत्येत्यत आह—प्रकृतिनिर्मलाहारिणी-त्यादिविशेषणादीनि । आकृतिर्लोकसाधारणी कुतः प्रशस्येत्यतो वाहेमानि विशेषणानि । कृतिपक्षे—प्रकृष्टाः कृतयो हयग्रीव-नृसिंहादिकृतलक्षणग्रन्थाः, तेभ्यो निर्मला: अतएव हारिणी मनोहरा ; यद्वा प्रकृष्टाः कृतयः हयग्रीवादिग्रन्थाः, तेषां निर्मलः अदुष्टः अविरुद्धो योऽर्थः, तस्याहारा आहरणं स्वीकरण मिति यावत् ; सा तस्यास्तीति तथोक्ता । आकृतिपक्षे—प्रकृति-निर्मला स्वभावतोऽदुष्टा, अतएव हारिणी मनोहरा ; तुलसी-नलिनाक्षमणिमयहारवती वा । अथवा प्रकृतितो निर्मला । प्रकृतिनिर्मला ये गोमयगोमूत्रगोक्षीरगोदधिगोघृतादयः पदार्थाः, तेषा मेवाहरोऽस्यास्तीति तथोक्ता ॥ कृतिपक्षे—सेविनां ग्रन्था-र्थानुभवकारिणां विशयहारिणी संशयपरिहारिणी । अतएव

सुधाविमतिकारिणी सुधापानविषयकवैमुख्यदायिनीति यावत्। सकलसंशयपरिहारकशब्दार्थातिमधुरा एतद्ग्रन्थसेवापराणां पीयूषपानेऽपीच्छा न प्रवर्तत इति भावः। आकृतिपक्षे—सेविना मन्तेवासिनां सुधाविमतिकारिणी झटितिग्रन्थार्थावगाहनसमर्था या मतिः, तां कर्त्तुं शील मस्य,स्तीति॥ तथोक्ता। यद्वा सुधा सुधायमाना मनोवाग्वीक्षणैरिति शेषः। अतएव सेविना मविमतिकारिणी स्वविषये अवैमत्यकारिणीत्यर्थः। विमतिकारिणी परमात्मविषयकमतिकारिणी वेत्यर्थः। विशयहारिणी विशिष्टाभ्यां देवार्चनमन्त्रजपादिकर्मानुकूल्याचरितेनेति शेषः; शयाभ्यां हस्ताभ्यां मनोहरेत्यर्थः; पक्षद्वयेऽपि समानं स्पष्टार्थम्॥ २॥

यासां विकृतीनां विवृतिर्विधेयत्त्वेन प्रतिज्ञापिता, कास्ताः? कति? किन्नामानः? इत्यत आह—

जटामालादण्डरेखारथध्वजशिखाघनाः।
क्रम माश्रित्य निर्वृत्ता विकारा अष्ट विश्रुताः॥३

विश्रुताः—"जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः। अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः"—इति स्मृतिप्रमाणप्रसिद्धा इत्यर्थः॥ ३॥

विकृतिष्वष्टसु प्रथमतो निर्दिष्टो जटाश्रयः कतिविधः? केनाकारेण जटां निष्पादयति? इत्यत आह—

द्विपदादिक्रमाः पश्च प्राक् क्रमाद् व्युत्क्रमात्ततः।
पुनः क्रमादुच्चरिता जटात्वं प्रापिता बुधैः॥४

द्विपदादिक्रमाः त्रिपदचतुष्पदपञ्चपदक्रमा आदिपदेनाच

आद्याः। द्विपदादीत्यत्रादिपद मसङ्कुचित मित्यत्राह—पञ्चै-वेत्यर्थः। तैर्बुधैः कर्त्तृभिः, प्राक् आदौ, क्रमात् यथावस्थितानु-क्रमात्, उच्चरिताः; ततः पश्चाद् व्युत्क्रमादुच्चरिताः विपर्यासाद-भिलषिता इत्यर्थः; अथ पुनः क्रमात् पूर्व्ववद्यथावस्थितक्रमा-दित्यर्थः; उच्चरिताः सन्तो जटात्वं जटाशब्दवाच्यत्वं प्रापिताः' जटाशब्दवाच्यत्वेननिष्पादिताः। एवं त्रिवार मुच्चार्यमाणः क्रमो जटाशब्दवाच्यो ज्ञेयो भवति; स्वमुखेनोच्चार्य श्रोतॄन् प्रति ज्ञापिता इति यावत्। एवं क्रमस्यावर्तितस्य जटात्व मपि॥ ४॥

नन्वस्य कति? किन्नामानः क्रमाः? इत्यत आह—

**अनुक्रमश्चोत्क्रमश्च व्युत्क्रमोऽभिक्रमस्तथा।**
**सङ्क्रमश्चेति पञ्चैते जटायां कथिताः क्रमाः॥५**

अग्नि मीळे इत्यनुक्रमः। ईळे ईळे इत्युत्क्रमः। ईळेऽग्नि मिति व्युत्क्रमः। अग्नि मग्नि मित्यभिक्रमः। अग्नि मीळे इति संक्रमः। बुधैरित्यनुवर्तते। एव मनुक्रमादिनामका पञ्चक्रमाः जटायाम्। अग्नीमीळे ईळेऽग्नि मग्नि मीळे इत्यादिजटोच्चारणदशायां कथिता निर्दिष्टा भवन्तीत्यर्थः॥

ननु जटास्वरूप मनिरूपणीम्; अष्टविकृतीना मप्रामाणि-कत्वेन तस्य अप्रामाणिकत्वात्। तथाहि—किं विकृतीना मष्टानां पौरुषेयत्वेन प्रामाण्यम्? किं वा अपौरुषेयत्वेनाभ्यु-पेयते? नाद्यः; पुरुषेषु अप्रामाण्येन तत्कृतासु विकृतिषु प्रामा-ण्यानिश्चयात्। न द्वितीयः; यदपौरुषेयत्वेन प्रमाणाभावात्। अपौरुषेयवेदसम्बन्धेन तासा मपौरुषेयत्वं चेत एकवचनोभय-वचनादीना मपि तथात्वप्रसङ्गात्। अस्तु वा यथाकथञ्चित्तासां प्रामाण्यम्, तथापि नाध्येयत्वम्; तासां "स्वाध्यायोऽध्येतव्यः"

—इतिविधिविषयत्वाभावात्। तर्हि पदक्रमयोः कथ मध्येयत्व मिति चेत् ? न; "स्वर्गकामः प्रत्यक्ष मुभयकाम उभय मन्त्रेण"—इतिफलोक्तिपूर्वकतदध्ययनविधानात्; न ह्यीदृशो विधिर्विकृत्यध्ययनस्यास्ति। एतेन व्याकरणनिरुक्तादिवद्विकृतीनां प्रामाण्य मध्येयत्वं चेति परास्तम्।

अत्रोच्यते।—यदुक्तं पुरुषेष्वनिश्चयात् पुरुषप्रणीतप्रामाण्यानिश्चय इति, तन्न; व्याकरणनिरुक्तादिप्रणेतृष्वपि अस्य निश्चयेन तत्प्रणीताप्रामाण्यप्रसङ्गात्। व्याकरणादिप्रणेतृषु ऋषित्वेन निश्चय इति चेत् ? तर्हि विकृतिप्रणेतॄणां व्याड्यादीना मपि ऋषित्वेन तदुक्तविकृतीना मपि पौरुषेयत्वेनापि प्रामाण्ये बाधकाभावात्। अभ्युपेत्येद मुक्तम्; वस्तुतस्तु पदक्रमयोरिव अनाद्यविच्छिन्नाध्ययनाध्यापनपरम्परासिद्धे जटादीना मपौरुषेयत्वेनापि प्रामाण्ये बाधकाभावात्। लक्षणप्रणेतॄणां व्याड्यादीनां सम्प्रदायप्रवर्तकत्वेन जटादिनिर्मातृत्वाभावात्। अन्यथा अग्न्यादीनाम् "ऋग्वेद एवाग्नेरजायत"—इत्यादिश्रुतिसिद्धे ऋगादिसम्प्रदायप्रवर्त्तकाभावप्रसङ्गात्, प्रातिशाख्यलक्षणकर्तॄणां शौनकादिमुनीना मृगादिनिर्मातृत्वप्रसङ्गाच्च। अत्रेमौ प्रयोगौ—

जटादिविकाराः, पौरुषेयाः; पौरुषेयत्वेनापि प्रामाण्यम्, प्रातिशाख्य मिव; अनाद्यध्ययनादिपरम्परागोचरत्वात्, संहितादिवत्।

जटादिविकाराः अधेयाः; विधिविषयत्वात्, पदक्रमवत्। न च हेतुरसिद्धः, तेषा मपि पदक्रमयोरिव श्रौताध्ययनविधिविषयत्वात्।

न च "अन्नाद्यकामो निर्भुजं ब्रूयात् स्वर्गकामः प्रतृणम्"—इत्याद्यौपनिषद्वाक्ये त्रयाणां संहितादीना मिव जटादीना मधेतव्यत्वेनाप्रतिपादनात् विकृतीना मध्ययनविधिनैव इति वाच्यम्। उपनिषदि क्रम मिति लघुनामनिर्देशं विना क्रमे सर्वविकृतिसाधारणे संहितापदोभयसापेक्षत्वरूपप्रकृति-निमित्तकोभय मन्तरेण रूपसामान्यशब्दप्रयोगान्यथानुपपत्या जटादिविकृतीना मप्यध्ययनविधिविषयत्वस्य सिद्धत्वात्। अत-एव भाष्ये "अथातो निर्भुजप्रवादाः"—इत्यत्र निर्भुजशब्देन पदक्रमयोरुभयोरेवोपलक्षणीयत्वेन तद्गुणसंविज्ञानाभिप्रायेण पदादेरिति निर्देशे कर्तव्येऽपि जटादिसर्वविकृतिसंग्रहार्थं पदादीना मिति बहुवचनान्तप्रयोगः। न चाद्यानुमानहेतौ आदिपदं व्यर्थम्; तस्याध्ययनपरम्पराविषयत्वरूपहेत्वन्तरसूच-कत्वात्॥

किञ्च भगवतो व्याडग्राचार्यस्य जटायां लक्षणप्रणेतृत्वान्यथा-नुपपत्या च जटाया अपौरुषेयत्वप्रामाण्याधेयत्वानां सिद्धिः। तथाचायं प्रयोगः,—जटा अपौरुषेया, प्रमाणम्, अधेतव्या च, ऋषिप्रणीतलक्षणत्वात्; संहितावत्; न ह्यपौरुषेयेष्व-प्रमाणेष्वनधेयेषु साम्प्रदायिकपाठसंरक्षणाय लक्षणानि प्रण-यन्ति॥

न च व्याडेः ऋषित्व माचार्यत्वं च कुत इति वाच्यम्। "आचार्या व्याडिशाकल्यगार्ग्याः"—इति शौनकेन व्याडेः शाकल्य-गार्ग्यर्षिभ्यां संग्रहीतत्वादाचार्यत्वेन कण्ठतो निर्देशाच्च।

शौनकोक्तो व्याडिऋषिराचार्यो लक्षणकर्ता, व्याडिर्नाम मानुषो भिन्न इति चेत्? एवं सति माध्यन्दिन्यादिशाखासु

जटाया लक्षणप्रवर्त्तकानां कात्यायनादीना मपि मानुषत्व-प्रसङ्गाद्यत्किञ्चित्तत् उपेक्षणीय मेव।

एतेनान्तरिक्षायतन मुभय मन्तरेणेत्यत्र साधारणोभय मन्त-रणशब्दव्याख्यापितविकृतीना मपि नृसिंहदेवताकत्वम्।

"अथ पद्येन मुभय मन्तरेण"—इत्यत्र सामान्यतो ज्ञापि-तानां तासां गुणत्वेन "नारुद्रः क्रमपाठकः"—इति, "पद-क्रमविशेषज्ञो वर्णक्रमविचक्षणः। स्वरमात्रविशेषज्ञो गच्छेदा-चार्यसम्पदम्"—इति पदक्रमयोर्यथापाठकस्य लौकिकालौकिकं फलवचनं न तथा जटाया इति वाच्यम्? उक्तद्वितीयप्रमाण-वचनेन विशेषपदेन जटादिविकृतीनां प्राप्तिः तत्पाठकाना मपि तादृशफलवचनात्; अन्यथा विशेषपदवैयर्थ्यप्रसङ्गात्॥

अन्यानि प्रमाणानि। वराहपुराणे—

"संहितापाठतः पुण्यं द्विगुणं पदपाठतः।
त्रिगुणं क्रमपाठेन जटापाठेन षड्गुणम्॥"

मार्कण्डेय उवाच—

"क्रमाध्ययनसम्पन्नो मन्त्रब्राह्मणपारगः।
जटापारायणपरो विष्णुलोके महीयते॥
जटापाठपरं विप्रं यो गर्हति मूढधीः।
पुनरावृत्तिराहित्यं न स प्राप्नोति; नान्यथा॥"

वृद्धमनुरप्याह—

"वेदवेदार्थतत्त्वज्ञा जटाक्रमविशारदाः।
श्रोत्रिया ब्राह्मणाः श्राद्धे पङ्क्तिपावनपावनाः॥"

पाराशर्योऽप्याह—

"संहितावित् स्वर्गगामी पदवेदी महर्गतिः।

क्रमी जनतप सत्यङ्गामी वैकुण्ठभाग् जटी ॥ ”

आदित्यपुराणे च—

“स्वधर्मशालिनो विप्रा मन्त्रब्राह्मणपारगाः ।
कर्मकाण्डेषु कुशलाः क्रमाध्ययनतत्पराः ॥
जटाध्ययनसम्पन्नाः सर्ववेदार्थपारगाः ।
निषेदुरन्तिदेवस्य सदसि ब्रह्मवित्तमाः ॥” —इति ।
‘वैदिकैःपठ्यमानत्वात् प्रत्यक्षस्मृतिमूलतः ।
जटाद्यध्ययनं कार्यं पङ्क्तिपावनकारणात् ॥
जटादिविकृतीनां ये पारायणपरायणाः ।
महात्मानो द्विजश्रेष्ठास्ते ज्ञेयाः पङ्क्तिपावनाः ॥”

—इतिचादित्यपुराणे ।

“शाकल्यस्य शतं शिष्या नैष्ठिकब्रह्मचारिणः ।
पञ्च तेषां गृहस्थास्तु धर्मिष्ठास्ते कुटुम्बिनः ॥
शैशिरो वाष्कलः साङ्ख्यो वात्स्यश्चैवाश्वलायनः ।
पञ्चैते शाकलाः शिष्या शाखाभेदप्रवर्त्तकाः ॥
ऋग्वेदादिमहाशाखा कल्पाख्या चेतरा मता ।
शाकलाः शौनकाः सर्वे कल्पशाखां प्रचक्षते ॥
कल्पो नाम श्रौतसूत्रं स्मार्त मप्युच्यते बुधैः ।
गार्ग्यश्च वाथ माण्डूको शैशिरीयप्रवर्त्तकाः ॥
मुनिर्व्याडिस्तु भगवान् सर्वशाखीयलक्ष्यकृत् ॥”

—इति ब्रह्माण्डे ॥ ५ ॥

तर्हि द्विपदक्रमत्वाविशेषाकारगर्भत्रिक्रमेषु पुनःपुन रुच्चार्यमाणात्त्रिपदादिक्रमण मपि क्रमव्युत्क्रमः पुनः क्रमैर्न जटाभाव मर्हतीत्याह—

आकारगर्भत्रिपदक्रमेष्वाकारः पूर्ववत् ।
पुनरुक्तं पदद्वन्द्वं त्रिक्रमे द्विपदभ्रमम् ।
हर्तुं मेव प्रवृत्तत्वाज्जटाभावं न चार्हति ॥ ६

आकारः गर्भे येषां ते आकारगर्भाः ते च ते त्रिपदक्रमाश्च तेषु यथोक्तेषु देवा एह देवेभिरागमत् इत्यादिषु आकारः पूर्वो ययोर्मध्ये तथोक्तं पुनरुक्तं पुनरुच्चारितम् एह आगमत् इत्यादि रूपं पदद्वन्द्वं त्रिक्रमे त्रिपदक्रमेषु द्विक्रमभ्रमं हर्तुं मेव प्रवृत्तत्वात् । देवाऽएह, देवेभिरागमदित्यादिक्रमेषु मध्यस्थाकारस्य पूर्वपदसङ्गतत्वेन वोत्तरपदसङ्गतत्वेन वा एकपद्यप्रतीतिप्रयुक्तद्विपदक्रमत्वभ्रान्तिं वारयितु मेवोच्चारितत्वादित्यर्थः । जटाभावं क्रमव्युत्क्रमपुनःक्रमैरुच्चारणविषयतां न चार्हति । चोऽवधारणे नैव प्राप्नोतीत्यर्थः । एहेत्यादेः पुनरुक्तस्य क्रमत्वाभावज्ञापनाय पदद्वन्द्व मित्युक्तम् । ननूक्तपदद्वन्द्वस्य क्रमत्वाभावः किमाकारपूर्वकत्व मुच्यते ? अथवा क्रमलक्षणाभावात् । नाद्यः ; ऐन्द्रसानासि मित्यादौ ऐन्द्रेत्यादीना मपि क्रमत्वाभावप्रसङ्गात् । नेतरः ; उत्तरक्रमं स्पृष्ट्वान्त्यपदवत्वलक्षणक्रमलक्षणस्य विद्यमानत्वादिति । नैवम् ; उक्तपदद्वयस्य त्रिविधक्रमान्तःपातित्वाभावात् । तथाहि — क्रमस्त्रिविधः, आद्यमध्यान्त्यक्रमभेदात् । तत्राद्यः क्रमः उत्तरक्रमं स्पृष्ट्वान्त्यपदमात्रः । मध्यमक्रमस्तु पूर्वोत्तरक्रमस्पृष्टपूर्वोत्तरपदः । अन्त्यक्रमस्तु पूर्वक्रमस्पृष्टपूर्वपदमात्रः । न ह्येतेषु क्रमेषूक्तपदद्वन्द्वस्य यस्य कस्यचिदन्तर्भावो भवितु मर्हति, येनास्य क्रमत्वं स्यात् । न चास्य मध्यमक्रमेऽन्तर्भावः ; तस्योत्तरक्रमं स्पृष्ट्वा अन्त्यपदत्वेऽपि

पूर्वक्रमस्पृष्टपूर्वपदत्वाभावात् । न चास्यापि पूर्वभूतत्रिक्रम-स्पृष्टपूर्वपदत्व मस्त्येवेति वाच्यम् । तथापि सर्वमध्ये क्रमसाधा-रणपूर्वक्रमान्त्यपदवत्त्वस्याभावात् । अङ्गीकृतैरव मुक्तं वस्तुतस्तु उत्तरक्रमस्पृष्टान्त्यपदत्वधर्मस्य त्रिक्रमनिष्ठत्त्वेनोक्तपदद्वयेनास्त्येव । उत्तरेणापि तेन तस्यां क्रमत्वप्रसङ्गः । तथाचायं प्रयोगः— मध्यम आकारगर्भत्रिक्रम उक्तक्रमः, अन्त्यपदसम्बन्धत्वे सति आकारगर्भक्रमत्वात् । सानुस्वारगर्भास्मदांऽऋचइत्यादि त्रिविक्रमवत् । एतेनाद्यक्रमलक्षण मुक्तपदद्वयेऽतिव्याप्त मिति निरस्तम् । कथञ्चिदुत्तरक्रमं स्पृष्टान्त्यपदमात्रेणाद्यक्रमवत् । क्रमत्वेऽपि द्विपदक्रमत्वभ्रान्तिवारकत्वेनान्यथासिद्धत्वादनन्यथा सिद्धक्रमत्वाभाव इति तत्वम् । अतो नोक्तपदद्वयस्य क्रमत्वा-भावाज्जटाभाव इत्यलम् ॥ ६ ॥

आकारगर्भत्रिविक्रमेषु द्विपदक्रमत्वभ्रमवारणाय पुनरा-कारसहितपदोच्चारण मित्यत्र सदृष्टान्त मित्याह —

सानुस्वाराकारगर्भत्रिक्रमप्रभृतौ यथा ।
द्विक्रमत्वभ्रमं हर्तुं मध्यस्थपदवेष्टनम् ॥ ७

अनुस्वारेण सहितः सानुस्वारः, स चासावाकारश्च तथोक्तः, स गर्भे एषां ते च ते त्रिक्रमाश्च ते प्रभृतिरादिर्यस्य तस्मिन्तथोक्ते । अस्मदांऽऋचः मोषुणः—इत्यादौ यथा द्विक्रमत्वभ्रमं हर्तुं मध्यस्थ-पदवेष्टनम् । अस्मदांऽऋचः मोषुण—इत्यादिक्रमेषु मध्यस्थस्य आं सु इत्यादि पदजातस्य पूर्वोत्तरपदैकप्रतीते प्रयुक्तद्विपद-क्रमत्वभ्रमवारणाय एत्या स्विति सु इत्यादि रूपं वेष्टनम्—

इत्यादिशब्दगर्भत्वे नावर्त्तनं क्रियते. तथैवाकारगर्भत्रिक्रमेषु। द्विक्रमत्वभ्रान्तिनिवारणाय प्रवृत्तत्वे न पुनरुच्चरितस्य मध्यस्थस्या· कारपूर्वकपदद्वयस्य न जटाभाव इत्यर्थः. । ७ ॥

क्रमे यथा प्रातिशाख्यलक्षणानुसरणं क्रियते, जटायां तथैव व्युत्क्रमेऽपि नकर्त्तव्यम्। किं न कर्त्तव्यं चेत्कि मनुसरणीय मित्यत आह—

जटायां क्रमयोः प्रातिशाख्यलक्षणलक्ष्यता।
व्युत्क्रमे सामता नैव तत्र व्याकरणं मतम् ॥ ८

जटायां क्रमयोः क्रमपुनःक्रमयोः प्रातिशाख्यलक्षण· लक्ष्यता; तल्लक्षितत्व मिति यावत्; स्वीकार्येति शेषः। व्युत्क्रमे तु सा प्रातिशाख्यलक्षणलक्ष्यता नैव मता न सम्मता नैव स्वीकर्त्तव्येति यावत्। अयम्भावः—जटायां क्रमपुनः- क्रमयोः मन्त्रसंहितोच्चारणाङ्गक्रमानुसारित्वादुचितं तयोः प्राति- शाख्यलक्षणलक्षितत्वं व्युत्क्रमस्य तथात्वाभावात्। लक्षणानुसरणं नोचित मिति चेत्, तर्हि व्युत्क्रमसन्धौ किं शास्त्रं प्रमाण मित्याशङ्कायां मत मुक्तं—तत्र व्याकरणं मत मिति। तत्र व्युत्क्रमसन्धिः कर्त्तव्य इत्यर्थः। तर्हि जटायां व्युत्क्रमसन्धौ व्याकरणसापेक्षत्वे तस्या अपि सादित्वं स्यात्; न ह्यस्या सादित्वं इष्टम्; अतो जटाया मपौरुषेयत्वं दुर्घट मेवेति चेत्, अनादेरपि जटाया अनादिव्याकरणप्रवाहप्रविष्टपाणिनि· व्याकरणसापेक्षत्वमात्रेणापि पौरुषेयत्वाभावात्। अन्यथा सादि- प्रातिशाख्य लक्षणग्रन्थसापेक्षत्वेन संहितापदक्रमाणा मपि पौरुषे- यत्वप्रसङ्गं स्यादिति। तदुक्तं हयग्रीवेण—"अभिक्रमे क्रमशास्त्रं

प्रमाणं स्यात् व्युत्क्रमे व्याकरणं प्रमाणम्—इति। अभिक्रमे अनुक्रमसङ्क्रमयोरित्यर्थः। क्रमशास्त्रं प्रातिशाख्य मित्यर्थः ॥८॥

ननु यदुक्त मुपनिषदि क्रमस्येव जटादीनां संहितापदोभयानुसारित्व मिति, तन्न; जटायास्तत्र क्रमानुक्रमयोः संहितानुसारित्वदर्शनेऽपि पदानुसारित्वादर्शनादित्यत आह —

षत्वणत्वे गत्वदत्वे ह्रस्वतां दीर्घतां तथा।
विसृज्य संहिताधर्मान् व्युत्क्रमे पदवत्पठेत् ॥ ९

जटायां व्युत्क्रमे षत्वणत्वगत्वदत्वह्रस्वत्वदीर्घत्वादीन् संहिताधर्मान गोषा इन्द्रो नृषा असि, नृमणा अधा पतिं, तमसो गा अदुक्षत्, क्षणासो दधि, सुमतिं न जुगुक्षतः, युवन्नो येषु वरुण क्षत्रं, मित्र वयञ्च सूरयः, अच्छा वदा तना गिरेत्यादौ क्रमेण प्रतीयमानान् विसृज्य विहाय, पदवत् पद इव। गोषा इन्द्र विन्द्रो गोसा गोषा इन्द्रो। गोसा इति गोऽसाः। इन्द्रो नृषा नृसा इन्द्र विन्द्रो नृषाः। नृमणा अधाधा नृमना नृमणा अधा। तमसो गा गास्तमसस्तमसो गाः। गा अदुक्षदधुक्षन्गा गा अदुक्षत्। क्षणासो दधि धधि क्षणासः क्षणासो दधि। न जुगुक्षतो जुघुक्षतो न न जुगुक्षतः। वरुण क्षत्रं क्षत्रं वरुणा वरुण क्षत्रं। मित्र वयं वयं मित्रा मित्र वयम्। अच्छा वदा वदाच्छ अच्छा वदा। वदा तना तना वद वदा तना। द्युम्नासाह्स्यभ्यऽभिद्युम्नसहन्द्युम्नासाह्स्य भि। द्या सुषास सुषसन्द्यान्द्यासुषासम्। चिक्लभनेनस्कभीयान् स्कभीयान् स्कभनेन चिचिक्लअनेन स्कभीयान्। इत्यादि पदार्थः। एवंरूपेण षत्वणत्वगत्वधत्वह्रस्वत्वदीर्घत्वादीनां संहितागतषत्वादिकं नैव ॥ ९ ॥

क्वचिज्जटाव्युत्क्रमे संहितागत मोकार मपि न पठेदित्याह—

**संहितायां य ओकारः पद मौकारतां व्रजेत्।**
**क्वचित् सव्युत्क्रमे वाच्ये औत्वेनैव जटा भवेत् ॥१०**

जटाध्ययने प्रसक्तौ व्युत्क्रमे संहितागत मोकारं विसृज्य पदगत औकार एव जटा पठनीया। यथा—मृज्यते सानो सानौ मृज्यते मृज्यते सानौ। सानौ अव्ये वेत्र सानौ सानो अवेत्र इत्यादि ॥ १० ॥

ननु त्रिक्रमचतुःक्रमपञ्चक्रमेषु क्रमव्युत्क्रमयोराद्यन्त्यपदयो रावर्त्तनवत् मध्यस्य पदस्यापि किं मावर्त्तनङ्कार्य मेवेत्यतो नेत्याह—

**क्रमेऽवसानस्यान्त्यत्वादाद्यस्य व्युत्क्रमेऽन्त्यतः।**
**तयोरावर्त्तनं युक्तं न मध्ये त्रिक्रमादिके ॥ ११**

अन्त्यत इति भावपरो निर्देशः अन्त्यत्वे इत्यर्थः। त्रिक्रमादिके त्रिक्रमचतुःक्रमपञ्चक्रमेषु जटायां क्रमे अवसानपदस्यान्त्यत्वात् व्युत्क्रमे आद्यपदस्यान्त्यत्वात् तयोः अन्त्याद्य पदयोः। मोषुणः, आसुषाणः, ऊर्द्धऊषुणः, अगादारैगुक्षणा, निरस्त्वसार मस्कृतोषसम्—इत्यादिक्रमेषु क्रमेणा वस्थियोः,—नः मो, नः आसु, नः ऊर्द्धं, क्षणा अगात्, उषसं निः—इत्यादिरूपयोरावर्त्तेन मावर्त्य पठनं युक्तम्। विप्रतिपन्नानि द्वितीयाद्यपदानि आवर्त्य पठनीयानि; क्रमान्त्यपदत्वात्; अर्द्धर्चान्त्यक्रमान्त्यपदवदिति युक्तियुक्त मित्यर्थः। मध्ये व्युत्क्रमस्य मध्ये। मध्यस्य पदे सु स्म इत्येवं-रूपेषु मध्यस्थेषु पदेषु आवर्त्तनं न युक्तम्, कुतः? अन्त्यपदत्वा-भावात् इति भावः; किन्तु व्युत्क्रममध्ये एकवारपठन मेव

कार्यम्। अवर्त्तनस्यान्त्यपदमात्रावर्त्तकत्वादित्यर्थः। यथा— मोषुणो न:सुमो मोषुणः; मोइतिमो, स्विति सु। आसुषाणो· नस्मास्व३सुषाणः; स्मेति स्म। ऊर्द्धूंऊषुणो नःसूर्द्धूं ऊर्द्धूंऊषुणः; उं इतूंर, स्विति सु। अगादारैगुक्रष्णा क्रष्णारैगगाद्- गादारैगुक्रष्णा; अरैगित्यरैक्, उं इतुंर। निरुस्वसारमस्कृतोषस मुषसमकृतस्वसारमुनिर्निरुस्वसारमस्कृतोषसम्; उं इतुंर, स्वसार मिति स्वसारम्, अकृतेत्यकृत। अत्र द्वित्रिचतुः- क्रमपञ्चक्रमभ्रमवारणाय त्रीणि वेष्टनानि। न चानुमान इतिकारगर्भत्वेनावर्त्तनीयत्व मुपाधिः, तस्य जप्यमानमन्त्रेषु अध्ययनवाक्येषु च साध्याव्यापकत्वात्। न च क्रम- प्रविष्टत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वादय मुपाधिः अधीयत्र· धीयमानक्रमेषु, तथापि तस्य तादृशसाध्याव्यापकत्वात् नापि साधनावच्छिन्नसाध्यव्यापकत्वादय मुपाधिरिति। तस्य स्वव्यतिरेकेण साध्यव्यतिरेकसाधनासमर्थत्वात्। तथाहि—इति गर्भत्वेनावर्त्तनीयत्वाभावेन साध्याभाव साधने जप्यमानक्रमेषु व्यभिचारः; अन्त्यक्रमस्याप्यधेतृभिरावर्त्तनीयत्वात्॥ ११॥

व्युत्क्रमे त्रिक्रमादौ मध्यस्य पदस्यापि पदधर्मो ज्ञातव्य इत्याह—

क्रमाणां त्रिक्रमादीनां व्युत्क्रमे मध्यमम्पदम्।
अप्यनावर्त्तितं धर्मम्पदस्य प्रतिपद्यते॥ १२

त्रिक्रमादीनां त्रिक्रमचतुःक्रमपञ्चक्रमाणां जटायां व्युत्- क्रमे अनावर्त्तित मपि मध्यस्थपदम्पदस्य धर्मं ऋखत्ववर्णवि· लोपवर्णान्तरागमरूपं प्रतिपद्यते। यथा—निराविध्यद् गिरिभ्यो

गिरिभ्योऽविधाविरा निराविधाविरिभाः; अविधादित्य-विध्यत्। योनिमारैगरैग्योनिंयोनिमारैग; अरैगित्यरैक। अगादारैगुक्कषणा क्षणारैगगादगादारैगुक्कषणा; अरैगित्यरैक, उं इतुंग। निरुखसारमस्कृतीषस मुषसमक्तखसारमुनि-र्निरुखसारमस्कृतोषसम्। उं इतुं, खसार मिति स्वसारम्, अक्तेत्यक्तत। चिल्कभनेनस्कभीयान् स्कभीयान् स्कभनेन चिश्चिल्क-भनेन स्कभीयान्; स्कभनेनेति स्कभनेन। प्रव आविधात् आरै-गिति पदयोः ह्रस्वत्वम्, अक्तेत्यत्र सकारलोपः, कभनेनेति पदे सकाररूपवर्णान्तरागमः। परीतोषिञ्चत सिञ्चतेतः परि परीतोषिञ्चत इति जटाया मित इति पदे विसर्गरूपादेशौ-कारस्य पुनर्विसर्गरूपादेशो द्रष्टव्यः॥ १२॥

मध्यपदबहिःकरणेन पूर्वपदस्य मध्यमपदान्तरितपदमेल-नेनकपद्य मादाय प्रवृत्तक्रमेषु कथञ्जटेत्यत आह —

मध्यं पदं बहिः कृत्वा पूर्वोत्तरपदैक्यतः।
विहितं पद मेकं यत्तद्विलोमजटाविधौ॥१३
प्रवर्तितपदात्पूर्वं भव मुक्त्वा बहिष्कृतम्।
ब्रूयादथ शुनःशेप मेकीभावयुतं पदम्॥ १४

शुनश्चिच्छेपं निदित मित्येवं रूपं संहितायां मध्यस्थं शुनः शेप मित्यादिरूपपदद्वयं मध्यगतश्चिदित्यादिरूपबहिष्कृतम्; पूर्वोत्तरपदैक्यात्; शुनःशेपमित्यादिपूर्वोत्तरपदमेलनादित्यर्थः। एकं पदं विहितं शुनःशेप मित्यादिरूपेणैकत्वेनोच्चरितं यत्पदं तत्। शुनश्चिच्छेपं निदित मित्यादिक्रमस्य विलोमजटा-

विधौ व्युत्क्रमजटाया मावर्तितत्वात् । निदित मिति आद्यावर्तितपदात् पश्चादनन्तरम्, आदौ बहिष्कृतं चिदित्यादिरूपं पदं मुक्त्वा, अतः परश्चिदित्यादिपदानन्तरं ब्रूयादित्यर्थः — यथा — शुनश्चिच्छेपं निदितं निदितं चिच्छुनःशेपं शुनश्चिच्छेपं निदितं ; शुनःशेप मिति शुनःशेपम् चिदिति चित् । ईयते नरा च शंसं दैव्यं दैव्यं च नराशंस मीयत ईयते नरा च शंसं दैव्यम् । नराशंस मिति नराशंसम् चेति च । नरा वा शंसं पूषणं पूषणं वा नराशंसं नरा वा शंसं पूषणम् ; नरा शंस मिति नराशंसम् ॥ १४ ॥

ओदन्तानां निपातानां व्युत्क्रमजटायां प्रगृह्यत्व माश्रयणीय मेवेत्यत आह —

## ओदन्तानां निपातानां विलोमेऽस्ति प्रगृह्यता ॥ १५

स्पष्टोऽर्थः । उपोरथेषु रथेषूपो उपोरथेषु । प्रोअस्मा अस्मै प्रो प्रोअस्मै । ओषुणो नःस्वो ओषुणः ॥ १५ ॥

तर्हि ओकारान्तसम्बोधनाना मपि किं प्रगृह्यत्व माश्रयणीय मित्यत आह—

## ओदन्तसम्बोधनानां व्युत्क्रमे न प्रगृह्यता ॥ १६

ओकारान्तसम्बोधनार्थकशब्दानां विलोमजटायां प्रगृह्यत्वं नाश्रयणीय मित्यर्थः । यथा — आ वायो वायवाऽऽवायो । इन्द्राविन्द्रायेन्द्रायेन्द्राविन्द्विन्द्राय । अध्वर्योअद्रिभिरद्रिभिरध्वर्यो अद्रिभिः । अध्वर्योद्रावय द्रावयाध्वर्यो ध्वर्यो द्रावय । १६ ॥

## इकारान्तास्त्वाक्षराश्चेवान्ता नैव प्रगृह्यकाः ॥ १६

त्र्यक्षरात्मका इकारान्ता इवान्ताः शब्दाः न प्रगृह्याः विलोमे । यथा — दम्पतीव क्रतुविदा क्रतुविदा दम्पतीव

ऋतुविदा । दम्पती इवेति दम्पती॒ऽइव । उषासानक्ता विदुषीव विदुषीवोषासानक्तोषासानक्ता विदुषीव । उषसा नक्तेत्युषासा नक्ता ; विदुषी इवेति विदुषीऽइव । उपधीव प्रधीव प्रधीवो-पधीवोपधीव प्रधीव । उपधी इवेत्युपधीऽइव । प्रधी इवेति प्रधीऽइव ॥ १६ ॥

ईदूदेदोदन्तशब्द इत्यन्तास्त्वचरा अपि ।
प्रगृह्या एव जायन्ते संहितासन्ध्यभाविनः ।
इदुदेदोऽद्विवचनान्तैकारास्तु तथा न हि ॥ १७

ईकार ऊकार एकार ओकारान्ताः द्विवचनान्ताः चाच-रान्ताः अचाचरान्ता अपि पदकाले इतीकारान्ताः संहितायां क्वचिदपि सन्ध्यभावात् प्रगृह्या एव जायन्ते ; विशेषेण जटाया मिति शेषः । इन्द्राग्नी आ गतङ्गत मैन्द्राग्नी इन्द्राग्नी आगतम् । ऊरू तत्तदूरू ऊरू तत् । पादा उच्येते उच्येते पादौ पादा उच्येते । उभे भद्रे भद्रे उभे उभे भद्रे । उपो अदृश्रन्नदृश्रन्नुपो उपो अदृश्रन् ॥ १७ ॥

उः प्रगृह्यत्व मेत्येष मदनादिर्वतां स्वरे ॥१८

उः उकारः प्रगृह्यत्व मेति । एष उकारः मदनादिः, मकार दकार नकार पूर्वः सन्; वतां वल' वकारादेश मिति यावत् । आद्योदाहरणं यथा— असाउ अर्चिषार्चिषो असाउ असाउ अर्चिषा । इय मुते त ऽउ इय मिय मुते । गन्तवाउ उ गन्तवै गन्तवाउ । द्वितीयोदाहरणं यथा —अयमुवां वाम्वय मुयमुवाम् । इमाउवां वांविमा इमाउवाम् । उभाउनूनं नूनं मुभा उभाउ

नूनम्। उदुत्यं त्यमुदुदुत्यम्। इदमुत्यं त्यमिद मिदमुत्यम्। उदुत्यत्यदुदुदुत्यत्। यस्मादिरस्यसीरस्यसियस्मै यस्मादिरस्यसि। इरस्यसीदिदिरस्यसीरस्यसीत्। इदुनु न्विदिदुनु। न्वर्योऽर्योनु न्वर्यः। इत्यादि। आदुनु न्वादादुनु। नुते तेनु नुते। इत्यादि ॥१८॥

इदुनु आदुनु इत्यादिषु व्युत्क्रमे उकारस्य तु उकारान्तर-व्यवहितनकारपूर्वकत्वाद् वकारादेश इत्यत आह—

**उकारः प्राक्तनोकारेणैक्यादेव नपूर्वकः।**

**व्युत्क्रमे नु-उ-इत्यत्राप्येति वादेश मञ्जसा ॥ १९**

व्युत्क्रमे नु उ इत्यत्रापि उकारः प्राक्तनोकारेण नकारा-न्तरभावी, पूर्वतनोकारेण सहैक्यादेकादेशवत्त्वादेव नपूर्वकः सन् अञ्जसा निश्चयेन, वादेशं वइत्यादेश मप्येति। अपिपदेन उकाररहितनकारपूर्वकत्वं च समुच्चिनोति ॥ १९ ॥

**परेष्वुकार ओकार आव औकारलोपिनः।**

**वकारो लुप्यतेऽन्यस्मिन् लुप्यते न स्वरे परे ॥ २०**

विलोमजटाया मिति शेषः। औकारलोपिनः, औकारादेश-भूतस्येति यावत्, आवः आवादेशस्य वकारः, उकारे ओकारे ऽपि परे लुप्यते ; न स्वरेऽन्यस्मिन् परे लुप्यत इत्यर्थः। ऊरूपादौ पादाऊरू ऊरूपादौ। उभाउनूनं नूनमुभा उभाउनूनम्। ओमानमश्विनावश्विनाओमान मोमानमश्विना। ओजीयोष्ट्वाो ष्ट्वाओजीय ओजीयोष्ट्वाो ॥

"तत्रचरान्तप्रगृह्याणा मुकारामश्रितस्य च।
विलोमे पदसन्धौ तु प्रगृह्यत्वं नविद्यते ॥"—

इतीन्द्राग्नीइत्यादेर्विलोमजटायां न प्रगृह्यता इत्याह कश्चित्, तन्न ; तस्य त्र्यक्षरात्मकत्वान्तमात्रविषयत्वात् । अन्यथा दम्पती-वेत्यादिवदिहेन्द्राग्नीइत्यादेश्च कचित् वक्तव्यं स्यात् संहितायाम् ।। २० ॥

## उकार ओकारभावं गतोऽपि स्यात्प्रगृह्यकः ।। २१

विलोमे जटाया मुकार ओकारभावं गतोऽपि प्रगृह्य एव स्यात् । असाउअर्चिषार्चिषोअसावसाउअर्चिषा । अभ्युत्थ्यु प्र प्रोअभ्युत्थभुत्थ्यु प्र । अगादारैगुक्षणा क्षणोआरैगगा दगा-दारैगुक्षणा ॥ २१ ॥

## यत्राकारोऽवगृह्यत्वे दृश्यते व्युत्क्रमे तु सः ।
## इकारेणैक्य मापन्नस्तत्रैव पररूपवान् ।। २२

यत्र एकारे अवगृह्यत्वे द्वितीयपठने अकार एकारगुप्तेने-कारेण सहैक्य मापन्नः एकत्वेनोच्चारणवानपि पररूपवानेव, न तु वृद्धिमान् । यथा — काममेत्येत्याकामं काममेत्य । एत्यास्मे अस्मेएत्येत्यास्मे । एत्येत्याऽ एत्य ।

अत्रायं विवेकः ।—क्रमवेष्टनपदानि द्विविधानि, अन्त्यान्य-नन्त्यानि चेति ; तान्युभयविधान्यपि इतिगर्भत्वे न वेष्टितान्येव । तान्यपि द्विविधानि, इवान्तानीवान्तभेदात् । तत्रेवान्तानि पदक्रमोभयसाधारणक्रममात्रसाधारणभेदात् द्विधा ।

तत्राद्यानि यथा — मेनेइवेति मेनेऽइव । दम्पतीइवेति दम्पतीव उपधीइवेतुप्रपधीऽइव । प्रधीइवेति प्रधीऽइव । आर्त्नी-इवेत्यार्त्नीऽइव । इत्यादीनि । अत्र त्र्यक्षरात्मकानीवान्तानि

पदक्रमसाधारणेनेतिगर्भत्वेन वेष्टितानि दम्पतीवेत्यादीनि जटायां व्युत्क्रमे न प्रगृह्यतां यान्ति ।

अन्यानि पदक्रमसाधारणेनेतिगर्भत्वेन वेष्टितान्यपि जटाव्युत्क्रमे प्रगृह्या एव ज्ञातव्यानि । तानि यथा—मेनेऽइवेति मेनेऽइव । अक्षीइवेत्यक्षीऽइव । प्रधीइवेति प्रधीऽइव । इत्यादीन्युदाहरणानि पूर्वं निरूपितानि ।

क्रममात्रसाधारणानि क्रमकाले एव इतिगर्भत्वेन वेष्टितानि । यथा—ग्रावाणेवेति ग्रावाणाऽइव । गृध्रेवेति गृध्राऽइव । रथीवेति रथीऽइव । पत्नीवेति पत्नीऽइव । मह्विषीवेति मह्विषीऽइव । इत्यादीनि । एषां पदानां व्युत्क्रमे नैव प्रगृह्यता । यथा—ग्रावाणेव तत्तद् ग्रावाणेव ग्रावाणेव तत् । गृध्रेवद्वृच्चं द्वृच्चंगृध्रेव गृध्रेवद्वृच्चम् । पत्नीवपूर्वहूतिं पूर्वहूतिम्पत्नीव पत्नीवपूर्वहूतिम् ।

अन्यानि इकारान्तानि उभयसाधारणानि । प्रधीवेत्यादीनि क्रममात्रसाधारणानि । मण्डूका उदकादिवेति पद्मप्रधीरिवेत्यादीनि ।

अनीवान्तानि पदक्रमोभयसाधारणक्रममात्रसाधारणभेदेन द्विविधानि । द्विविधान्यपि अ आ इ ई उ ऊ ए ऐ ओ औ इतिवर्णान्तपदभेदेन अनुस्वारविसर्गान्तपदभेदेन, व्यञ्जनान्ततद्रहितान्तभेदेन च चत्वारिंशद्विधानि ; तान्यप्यन्तानि अनन्यानि चेति । उदाहरणानि विस्तरभयात्कानिचिदेवेह लिख्यन्ते ।

अनिवान्तानि पदक्रमोभयसाधारणानि यथा— द्रवत्पाणी इति द्रवत्, पाणी । घृतवती इति घृत, वती । वाजिनी वसु

इति वाजिनौ, वसु । सुदानूऽइति सु, दानू मधुदुघे इति मधु, दुघे । संवरणे इति सम्, वरणे । पृथुस्तौ इति पृथु, स्तौ । इत्यादीनि ।

अनीवान्तान्यनन्तानि क्रममात्रसाधारणानि सानुस्वाराणि यथा – पुरोहितमिति पुरः, हितम् । रत्नधातममिति रत्न, धातमम् । सुरूपक्रत्नुमिति सुरूप, क्रत्नुम् । सुमतीनामिति सुमती, नाम् । इत्यादीनि । विभ्राष्टिमिति वि, भ्राष्टिम् । अभिद्युमित्यभि, द्युम् । एवं सानुस्वारोकाराद्यन्तोदाहरणानि द्रष्टव्यानि ।

अथानीवान्तानामनन्त्यानां सविसर्गाणां मकाराद्यन्तानामुदाहरणानि यथा — रघुमन्यवऽइति रघु, मन्यवः । निरुन्धानास इति नि, रुन्धानासः । गूर्तश्रवाऽइति गूर्त, श्रवाः । वसुतातिरिति वसु, तातिः । कविक्रतुरिति कवि, क्रतुः । युवयूरिति युव, यूः । सूक्तैरिति सु, उक्तैः । विश्वायोरिति विश्व, आयोः । इत्यादीनि सानुस्वारविसर्गव्यञ्जनान्तभिन्नानि ।

अनीवान्तान्यनन्तानि यथा — उपसद्यायेत्युप, सद्याय । समिधेति सम्, इधा । द्यावापृथिवीऽइति द्यावा, पृथिवी । अस्मयुरित्यस्म, यु । पुरुमन्तूइति पुरु, मन्तू । उभेइत्यु, भे । अवयाइत्यव, या । अयमोइत्ययं, मो । सजोषसाविति स, जोषसौ ।

व्यञ्जनान्तान्यनन्तानि यथा — उद्यन्नद्य ; उद्यन्नित्युदृ, यन् । सम्राडिति सम्, राट् । समित्समिदिति समित्, समित् । इत्यादि । उदुदु हर्षसे ; उदुदित्युत्, उत् । इत्यादि ।

अथान्तान्यनीवान्तानि सानुस्वाराणि । क्रममात्रसाधारणानि यथा— ऋलिजमित्यृत्विजम् । अच्छिन्नपत्राः सचन्ताम् ; सचन्तामिति सचन्ताम् । विश्वतः सीम् ; सीमिति सीम् । अनुमदेम जिष्णुम् ; जिष्णुमिति जिष्णुम् । अङ्गिरइत्यङ्गिरः । अरङ्कृताइत्यरङ्कृताः । धरुणो वसवो अग्निः । अग्निरित्यग्निः । अभ्रिगुरित्यभ्रिगुः । अरातेरित्यरातेः । विश्वदेवैरिति विश्वदेवैः । द्योरिति द्योः । द्यौरिति द्यौः ।

उभयातिरिक्तानि व्यञ्जनरहितान्तानि यथा— नूतनेहृत ; उतेतुग्रत । अवतनरा ; नरेति नरा । धियोनरा ; नरेति नरा । विराजति ; राजतीति राजति । वाजिनीवसू इति वाजिनीवसू । जनाँ अनु ; अन्वित्यनु । विघु यज्यू ; यजूर इति यजूर । वृषणश्च पौंस्ये । पौंस्य इति पौंस्ये । मन्दध्या इति मन्दध्यै । पितो इति पितो । वृषणावभिष्टौ । अभिष्टावित्यभिष्टौ ।

अथ व्यञ्जनान्तान्यन्त्यानि यथा —देवेभिरागमत् ; गमदिति गमत् । पुरुषः प्रजावान् ; प्रजावानिति प्रजावान् । उपरिखिदासीत् ; आसीदित्यासीत् । चरणा ममाभूत् । अभूदित्यभूत् । ये दिशा नृन् ; नृनिति नृन् । उषा व्यश्वैत् ; अश्वैदित्यश्वैत् । नूनोदिति नूनोत् । उत्थास्तौत् ; अस्तौदित्यस्तौत् ।

उभयसाधारणान्यन्त्यानि यथा —मातरा समीची ; समीची इति सम्, ईची । पितरेव शम्भू ; शम्भूइति शम, भू । प्रयज्यो इति प्र, यज्यो ॥ इति ॥ वेष्टनविवेकः ॥ २२ ॥

समया नाना भवन्ति ; तत्र कथं जटा कार्येत्यत आह—

आद्यपदद्वयं शुद्ध मुत्तरन्तु पदत्रयम् ।
अधिकं वाथ सर्वं वा समयोऽर्द्धर्च्च मुच्यते ॥ २३

तत्रादिमे पदद्वन्द्वे जटां कृत्वा जटीकृतौ ।
द्वितीयं समयाद्यञ्च संयोज्योक्त्वा जटां ततः ॥ २४
सर्वस्मिन्नुत्तरेऽर्द्धर्चे समये संहितां पठेत् ।
पदत्रयादौ समये शुद्धस्याद्यपदद्वयम् ॥ २५
संहिता मवधीकृत्य ब्रूयाच्छुद्धम्पदं यदि ।
एक मेव तदा शुद्धावध्युक्त्वा संहितां ततः ॥ २६
शुद्ध मन्त्य मुपान्त्यञ्च समयस्यान्तिमम्पदम् ।
योजयित्वा जटा मुक्त्वा पदं शुद्धस्य वेष्टयेत् ॥ २७

यत्रार्धर्चे आद्यन्तपदद्वय मेव शुद्धम्भवति उत्तरम्पदत्रयम्पद-चतुष्टयात्मकं वा उत्तरं सर्वं मधर्चं वा, स समय उच्यते। तत्रादिमे पदद्वन्द्वे आद्ये पदद्वये प्रथमं जटाङ्कृत्वा जटीभूते क्रमे द्वितीयं समयाद्यञ्च पदं संयोज्य जटा मुक्त्वा ततस्तदनन्तरम् उच्चरितं समये पूर्वसमये चेत् तथा हि पठेदित्यर्थः। यथा — सदस्यास्य सत्स-दस्य। अस्य मदे मदेऽस्यास्य मदे। मदे सद्वस्य पीतामिन्द्रः सदस्य सख्येषकार। पदत्रये जटीकृतशुद्धपदद्वयानन्तरं पदत्रयात्मक-पदचतुष्टयात्मकमात्रे वा समये शुद्धभागस्याद्यम्पद मवधीकृत्य संहितां ब्रूयात्। यथा — समाकृणोषि जीवसे जीवसे समाकृणोषि समाकृणोषि जीवसे। समाकृणोषीति सम्, आकृणोषि। जीवसे वि वि जीवसे जीवसे वि। वि वो मदे विश्वा सम्पश्यंत्सम्प-श्यन्विश्वाविश्व सम्पश्यन्।

उक्तान्यपदद्वयानन्तरभाविसमयानन्तर मेक मेव शुद्धं चेत् कथं समयसंहिता पाठ्या ? शुद्धैकपदस्य कथं वा जटा कार्येत्यत उक्तम् — "शुद्धं पदं यद्येक मेव" — इति। यदि जटीकृताद्यपद-

द्वयानन्तरभाविसमयानन्तर मेक मेवं शुद्धं पदं स्यात्, तदा शुद्धैकपद मवधीकृत्य मध्यसमयसंहिता मुक्ता ततः शुद्ध मन्त्यम्पदं समयस्यान्तिमम्पदम् अन्त्यभूत मर्धर्चस्योपान्त्यभूतम्पदं योजयित्वा योज्यमानपदद्वयस्य जटा मुक्ता शुद्धान्तिमपदं वेष्टयेत्। यथा— पिबतं सोमं सोमं पिबतं पिबतं सोमम्। सोमं मधुमन्तं मधुमन्तं सोमं सोमं मधुमन्तम्। मधुमन्त मश्विना बर्हिः। सीदतं सुमत् सुमत्सीदतं सीदतं सुमत्। सुमदिति सु, मत्। एतेन यत्रासत्या परावति यद्वास्थो अध्यम्बरेऽम्बरेऽध्यध्यम्बरे अम्बर इत्यम्, बरे इति जटा वाच्येति सूचितं भवति।

आद्यान्त्ये एव शुद्धे यत्र, तत्र पदे इमे समयस्यादि- मान्त्याभ्यां संयोज्य कथयेज्जटाम्; यत्रार्धर्चे आद्यान्त्ये एव पदे शुद्धे भवतः, मध्ये सर्वोऽपि समयो भवति, तत्रार्धर्चे इमे आद्यान्त्ये पदे क्रमादिति शेषः। समयस्य मध्ये गलितस्याद्यान्त्याभ्यां संयोज्य जटां कथयेदित्यर्थः। यथा— पुरुत्रा वृत्रहन्त मावृत्र हन्त मा पुरुत्रा वृत्रहन्त मा। पुरुत्रेति पुरुत्रा। वृत्रहन्तमा नो भूतं पुरुस्पृहा पुरुस्पृहा भूतं भूतं पुरुस्पृहा। पुरुस्पृहेति पुरु- स्पृहा॥ २१—२७॥

आद्यमध्ये एव शुद्धे पदे द्वे यत्र तत्र तु।
आद्ये तल्लग्नसमयस्याद्योपेते जटाविधिः॥ २८
समयस्योत्तरस्यादियुक्ते मध्ये जटाविधिः॥ २९

यत्रार्धर्चे आद्यमध्यस्थे आदिमध्यस्थे द्वे एव पदे शुद्धे भवतः, यच्छुद्धयोर्मध्ये शुद्धान्ते च समयो भवति, तत्राद्यपदे शुद्धे तल्लग्नसमयस्याद्यपदसम्बन्धगलितस्यादिपदं यदन्ते नोपेतेन सह

समयपदानां यत्र भवति तत्रेत्यनुवर्तते पदद्वये इत्यर्थः। जटा-विधिः सम्पद्यत इति शेषः। समस्थादिभूतं शुद्धं, यथा—चत्वं जिन्वन्तं जिन्वन्तं चत्वं चत्वं जिन्वन्तम्। जिन्वन्तं मुत जिन्वन्तम्। त्रन्हतं हतं त्रन्त्रन्हतम्। हतं रक्षांसि सेधत ममीवाः। एव मेव धेनूजित मित्यत्रापि जटा द्रष्टव्या ॥ २८, २९ ॥

यत्र प्राक् समयस्तत्र शुद्धांशाद्यद्वयावधिः।
संहितां सम्पठन्नेव विदध्याच्छुद्धयोर्जटाम् ॥ ३०
यत्राद्यांशो भवेच्छुद्धः समयश्चोत्तरांशकः।
पूर्वांशान्त्ये तत्र पश्चात्समयाद्यपदेन च ॥
योजयित्वा जटां तत्र जटाविकृतिकोविदः ॥ ३१

इत्यस्योत्तरवाक्यादाकृष्य शुद्धांशाद्यद्वयावधिः। शुद्धांशः शुद्धो भागः तस्य ये आद्ये पदे ते अवधी यस्मिन् कर्मणि यथा भवति तथा। संहितां प्रागगालित संहितां पठन्नेव शुद्धयोः शुद्ध-भागाद्यपदयोः जटां विदध्यात्। प्रथमतो जटात्वेनोच्चारणं कार्य मित्यर्थः। यथा—तवायम्भाग ऋत्वियः सरस्मि सरस्मि ऋत्वियऽ ऋत्वियः सरस्मिः। अर्धर्चपूर्वभागस्यैव। शुद्धतादशायां कथं जटेत्यत उक्तं यत्राद्यांशो भवेच्छुद्ध इत्यादि। यत्रार्धर्चे आद्यंशः पूर्वभागः शुद्धो भवेत्, उत्तरांशकः स्वार्थे कः; उत्तरभागस्तु समयो भवेत्, तत्र विकृतिकोविदः विकृत्यष्टकपाठकुशल इति यावत्। पूर्वांशान्त्यः शुद्धपूर्वभागांशान्त्यपदः। पश्चात्समयाद्य-पदेन योजयित्वैव जटाङ्कुर्यात् जटात्वं प्रापयेत्ततः समय-संहितां पठेदित्यर्थः। यथा—वाजवन्तामरुत्वन्ता मरुत्वन्तावाज-

वन्ता वाजवन्तामरुत्वन्ता। वाजवन्तेति वाज, वन्ता। मरुत्वन्ता जवितुर्गच्छणो हवम्। एतेनेयुषीणा मित्यर्द्धर्चः आयतीना मिति शुद्धस्य मध्यपदस्य पूर्वसमयसंहितासम्बन्धेनापाद्यमानस्योत्तरसमयादिपदसम्बन्धस्य जटाभावः; पुनरायतीनाम्पदसम्बन्धपदपूर्वकसमयसंहितान्त्यपदसम्बन्धस्य पठ्यमानस्य अद्यौदित्यन्त्यपदस्य जटाभावो वेष्टनं ज्ञापितं भवतीति। यथा—ईयुषीणा मुपयाश्वतीना मायतीनां प्रथमा प्रथमायतीना मायतीनां प्रथमा। आयतीना मित्या, यतीनाम् प्रथमोषा व्यद्यौद्द्यौद्दि व्यद्यौत्। अत्र केचिदाहुः—प्रथमोषा व्यद्यौद्द्यौत्, अद्यौदित्यद्यौत् इति तच्चिन्त्यम्। तथाहि—अद्यौदित्यादिशुद्धान्तपदानां पूर्वपदसम्बन्धेन क्रमितत्वं जटीकृतत्वं चावश्य मभ्युपेयम्। अन्यथान्यानां शुद्धानां तथाभावनीय मनुभवात्; वैषम्ये कारणाभावात्। न च अद्यौदित्यादीनां पूर्वपदस्य गलितत्वेन क्रमितत्वादिकं युक्त मिति वाच्यम्; तर्हि आयतीना मित्यादिशुद्धगलितमध्यस्थपदानां पुरुत्वेत्यादिशुद्धसमयपूर्वभाविपदानां मुत्तरसमयादिपदसम्बन्धेन क्रमितत्वादिकं न स्यात्। न च तेषा मुत्तरसम्बन्धाभावे शुद्धत्वं स्यादिति वाच्यम्। एवं सति अन्त्यस्य गलितोत्तरपदस्य कुतः शुद्धत्वख्यापनम्। तथाच—शुद्धेपद युक्तसमयसंहितोच्चारणपूर्वकतया पठितस्यापि शुद्धैकान्त्यस्य क्रमधर्मत्वादिरूपम्; वेष्टनायोग्यत्वेन वेष्टनाभावात् अक्रम मित्यस्य तस्य जटात्वेनोपयोगित्विरावर्त्तनविषयत्वासम्भवेन जटाधर्मवेष्टनविषयत्वस्याप्यभावात्। अन्त्यपदस्योत्तरार्द्धार्चीयोत्तरक्रमसम्बन्धप्रतीतिवारणाय पूर्वार्द्धक्रमसमाप्तिख्यापनत्वे श्रूयमाणसाम्प्रदायिकवेष्टनस्यान्यथासिद्धत्वाच्च। किञ्चान्येषां शुद्धार्द्धर्च-

गताना मन्यातिरिक्ताना माद्यानाद्यपदाना मुत्तरपदसम्बन्धेन क्रमितत्वनियमदर्शनात्। समयान्तरितानां तथाविधानां शुद्धाना मप्याद्यानाद्यपदाना मुत्तरपदप्रयोगेन क्रमभावजटाभावौ किं नाङ्गीकरणीयौ? तर्हि शुद्धार्धर्चस्थिताना मपि पूर्वपदसम्बन्धेन क्रमितत्वानियमदर्शनात् समयपूर्वकाणा मन्त्याना मपि पदानां पूर्वपदसम्बन्धेन क्रमितत्वादिकं कुतो नाङ्गीक्रियते? वैषम्ये कारणाभावात्। न हि क्रमत्व मुत्तरपदसम्बन्धप्रयुक्त मेवेति नियमोऽस्ति। अन्यथा शुद्धार्धर्चगताना मन्त्यानां पदानां पूर्वपदमात्रसम्बन्धिना मुत्तरपदसम्बन्धाभावेन क्रमत्वाभावप्रसङ्गात्। अतो क्रमितस्यैकपदस्यान्त्यस्य जटात्वेनावर्त्तनं वेष्टनञ्च वदता मिति साहसम्॥ ३०, ३१॥

प्लुतिस्थले कथं जटेत्यत आह —

## प्लुतिः श्रुता व्युत्क्रमेऽपि संहितायां पदक्रमे॥ ३२

संहितापदक्रमेषु श्रुता प्लुतिः व्युत्क्रमजटाया मप्यवश्य मङ्गीकार्येत्यर्थः। खिदासी३दासी३त् खित् खिदासी३त्। आसी३दुपर्युपर्यासी३दासी३दुपरि। भीरिव विन्दती३विदती३भीरिव भीरिव विन्दती३। इत्यादिव्युत्क्रमजटायाम्॥ ३२॥

स्वरिताः कति चिदेव प्रवर्त्तन्ते उत सर्वे इत्यत आह —

## जटायां स्वरिताः सप्त प्रवर्त्तन्ते विलोमके॥ ३३

विलोमजटायां सप्तापि स्वरिताः प्रवर्त्तन्त इत्यर्थः॥ ३३॥

ते किन्नामान इत्यत आह —

तिरोविरामोऽथ तैरोव्यञ्जनः पादवृत्तकः ।
जात्योऽभिनिहितः क्षैप्रः प्रश्लिष्ट इति ते स्मृताः ॥ ३४

ते सप्त स्वरिताः क्रमेण तिरोविरामादय इति स्मृताः स्मृतिप्रसिद्धा इत्यर्थः ॥ ३४ ॥

तिरोविरामलक्षण माह—

तिरोविराम उच्चैरेकोपसर्गमुखयुतः ।
उदात्त एकाक्षरोपसर्गः प्रथमः पूर्वो यस्य स्वरितः ॥३५

स तिरोविराम इत्यर्थः। अत्रोपसर्गभिन्नत्वं विशेषणीयम् ; अन्यथा इदं वि वीऽ१द मिदं वि इत्यत्र व्युत्क्रमे प्रश्लिष्टे अतिव्याप्तिः ॥ ३५ ॥

तस्योदाहरण माह—

प्रस्तुतश्च प्रचेत्यादौ तिरःपूर्वो विरामकः ॥ ३६

प्रस्तुतश्च प्रचेत्युक्तिः जपतश्च प्रस्तुतश्चेति पादस्मरणाय। च प्र, प्र च, च प्र इत्यत्र तिरोविरामः स्वरितो ज्ञात इत्यर्थः ॥३६॥

उपसर्गेतरोदात्तप्राक्तैरोव्यञ्जनः स्मृतः ॥ ३७

उपसर्गेतरोदात्तः प्राक् पूर्वो यस्य स स्वरितः तैरोव्यञ्जन इति स्मृतः स्मृतिप्रसिद्ध इत्यर्थः। अत्र तिरोविरामेऽतिव्याप्तिवारणाय उपसर्गेतरपदम्। उपलक्षण मेतत् ; विवृतिभिन्नत्वेन कम्मानाईत्वेनापीति विशेषणीयम्। तेन क भीं वदेति पादवृत्ते, आत्मा क क्केति जात्ये रथानान्नयेरा इत्यभिनिहिते, त्वं

स्य१ङ्ग देव्येति चैप्रे, इदं वि वी१द मिदं वि इति जटावुग्रत्क्रम-प्रश्लिष्टे च नातिव्याप्तिः ॥ ३७ ॥

तैरोव्यञ्जन मुदाहरणमुखेन स्पष्टयति —

स उक्तो व्युत्क्रमो हीळ्हे पुरोहित मिति क्रमे ॥ ३८

इळ्हे पुरोहित मित्यत्र व्युत्क्रमे जटायां तैरोव्यञ्जनो ज्ञेय इत्यर्थः । इळ्हे पुरोहितं पुरोहितं मीळ्हे ईळ्हे पुरोहितम् ॥३८॥

पादवृत्त माह —

विवृत्तिः स्वरितः पादवृत्तनामाभिधीयते ॥ ३९

तस्मा इन्द्रायेत्यादौ इकारादेः पादवृत्तत्ववारणाय स्वरित-पदम् । स्वरितत्वमात्रं तिरोविरामादिसाधारण मिति विवृत्ति-रित्युक्तम् । व्यञ्जनोपेतस्वरमध्यस्थो व्यञ्जनानुपेतस्वरो विवृत्तिः । इदं तु स्वरोक्तिमात्रम् । लक्षणं तु पूर्ववर्णोपेतत्वे सति व्यञ्जनानु-पेतस्वरत्व मिति । तेन गन्तवाउ इत्यादौ उकारस्य विवृत्तित्वम् । इमं मे गङ्ग इत्यादौ इकारादेः तदभावस्य ख्यापितो भवतीति॥३९

कथं जात्यादिलक्षणम् ? आह —

जात्यस्वरः स विज्ञेयोऽपूर्वो वा नीचपूर्वकः ।
यो वान्तो वा यकारान्तः क्व-यूष्यस्तदुदाहृतिः ॥४०
परनीचाकारगर्भावपूर्वौ नीचपूर्वकौ ।
एदोतौ स्तोऽभिनिहितौ तेमा-साय मुदाहृतिः ॥४१

उकारो वाथ वेकारोऽपूर्वो वा नीचपूर्वकः ।
उदात्तश्चानुदात्तेन दीर्घेणोत ह्रसीयसा ।
योगद्वयोऽथ यौ चैप्रौ न्यूषु-न्वस्येत्युदाहृतिः ॥ ४२
अपूर्वौ नीचपूर्वौच्च इश्च ह्रस्वो ह्रसीयसा ।
इना युक् प्रश्लिष्टनामाभीदं-वीदमुदाहृतिः ॥ ४३

जात्यादिलक्षण वाक्येषु चतुर्ष्वपि स्वरितपद मनुषञ्जनीयम् । स्वरितप्रकारत्वात्र तत्कण्ठत उक्तम् । अयं जात्यलक्षणवाक्य-योजनप्रकारः—योऽयं स्वरितः, अपूर्वः पूर्वाक्षररहितो वा नीचपूर्वको वा सन् वान्तः वकारान्तः यकारान्तो वा भवति, स उक्तलक्षणोपेतः जात्यनामा विज्ञेय इत्यर्थः । उदाहरणाभावात् क्वायं विज्ञेय इत्यत आह—क्व यूथ्य इति । क्व स्वित्को विद्वांस मित्यादौ, शिशितो यूथ्यो वृषा इत्यादौ च जात्यस्वरो विज्ञेय इति भावः ॥

अभिनिहितलक्षणवाक्यार्थोऽयम्—अपूर्वौ नीचपूर्वकौ वा एदोतौ एकारौकारौ परनीचाकारगर्भौ स्तः परभूतानुदात्त-ह्रस्वाकारेणेतिगर्भावरूपपूर्वरूप मापन्नौ भवतः । ता उभाव-भिनिहितनामानौ ज्ञेयावित्यर्थः । तयोरुदाहरण मस्तीति कण्ठत आह—नियुतः पुनस्तेमैवम्, मन साय मागादित्यादौ च द्वा उक्तौ अभिनिहितौ ज्ञातव्यौ इत्यर्थः ॥

तदनन्तरं क्षैप्रलक्षणवाक्यार्थः—अपूर्वो वा नीचपूर्वो वा उकारो वा इकारो वा उदात्तौ सन्तौ अनुदात्तेन दीर्घेण

ह्रसीयसा ह्रस्वभूतेन वा स्वरेण योगाद् वो वकारः अथवा यो यकारो भवति, तौ क्षैप्रौ उच्येते। ता उदाहृत्य दर्शयति—न्यूषु न्वस्येति उपलक्षण मेतत्; उर्वीवेत्याद्यपि ग्राह्यम्। न्यू१षु वाच्यम्। अतो नोरुदात्तवान्व१स्य, उर्वीव गातुः इत्यादौ उक्तविधक्षैप्रौ द्रष्टव्याविति भावः॥

अथायं प्रश्लिष्टवाक्यार्थः—उदात्तः अपूर्वः नीचपूर्वो वोच्चः. ह्रस्वः इः इकारः ह्रसीयसा ह्रस्वस्वरेणेति शेषः। इकारेण युक् युक्तः सवर्णदीर्घरूपैकादेशं प्राप्तः सन् इति यावत्। प्रश्लिष्टनामा भवतीत्यर्थः। तस्य प्रश्लिष्टस्य अभीदम् वी३दम् इत्याद्युदाहरणानि। अभी१द मेकम्, वी१दं ज्योतिर्हृदय इत्यादावुक्तः प्रश्लिष्टो ज्ञातव्य इत्याशयः॥ ४०—४३॥

चतुर्विधानां कम्पानां मध्ये यः कोऽपि वा भवेत्।
कम्पो वा तदभावो वानुक्रमे संक्रमे समः॥ ४४

जात्यादिचतुर्विधकम्पमध्ये यः कश्चन वा भवेत्, कम्पः तदभावो वा अनुक्रमसङ्क्रमयोः समान एवेत्यर्थः॥ ४४॥

कम्पेषु ह्रस्वदीर्घगतेषु विशेषप्रयोजनकं कालविशेष माह—

सार्धद्विमात्रकालाप्तौ जात्यक्षैप्रावदीर्घकौ।
मात्राद्वयं पूर्वभागे स्यात्पश्चादर्धमात्रिकैः॥ ४५
दीर्घगौ क्षैप्रजात्यौ प्रश्लिष्टाभिनिहितौ तथा।
चतुर्मात्राकालवन्तोऽनुदात्तोदात्तनीचकाः॥४६

सार्द्धद्विमात्राकालाप्तौ भाग आद्योऽनुदात्तकः ।
मात्राकालो मध्य उच्चो नीचोऽन्त्यः सार्धमात्रकः ॥४७

अदीर्घगौ ह्रस्वगतौ जात्यक्षैप्रौ सार्धद्विमात्राकालाप्तौ भवतः। तयोः जात्यक्षैप्रयोः कथं सार्धद्विमात्राकालस्य विनियोग इत्यत आह–मात्राद्वयम् मात्राद्वयोच्चारणकालो ज्ञेयः। तयोः पश्चादुत्तरभागे अनुदात्तरूपे अर्धमात्रिके अर्धमात्रोच्चारणकाल एव स्यात्। क्व१वोऽश्वाः। व्य१र्यः। दीर्घगतजात्याभिनिहितक्षैप्रप्रश्लिष्टानां कम्प्यमानानां क्रियानुच्चारणकालः स्यादित्यत उक्तम्–दीर्घगाविति। दीर्घगतौ क्षैप्रजात्यौ तथा प्रश्लिष्टाभिनिहितौ चेति चत्वारो भागत्रयेऽपीति शेषः, क्रमेण अनुदात्तोदात्तनीचस्वरोपेताः सन्तः तदुच्चारणसमये चतुर्मात्राकालवन्तो भवन्तीत्यर्थः। कथं चतुर्मात्राकालविनियोग इत्यत उक्तम्–सार्धमात्रेति। अनुदात्तरूपः मध्यभागः स्वोच्चारणावसरे मात्राकालो भवति, अन्त्यनीचः सन् स्वोच्चारणसमये सार्धमात्रकः अर्धमात्रोच्चारणसहितो भवतीत्यर्थः। यथा–रथ्यो३ना। व्यू३तयः। अभी३दम्। सो३यम् ॥ ४७ ॥

चतुर्णां जात्यादीनां कम्पे कारणं किमित्यत आह–

जात्यादीनां कम्पनं स्यादुदात्ते स्वरिते परे ॥४८

जात्यादिस्वरितानामुदात्ते स्वरिते वा परे कम्पनं स्यात्। जात्यादिकम्पनमुदात्तस्वरितान्यतरनिमित्तकमिति यावत् ॥ ४८ ॥

तर्हि सर्वोऽप्यभिनिहितो दीर्घगामित्वान्न नीचोच्चपुनर्नीच-भागभेदेन किं चतुर्मात्रककालो भवतीत्यतः क्वचिद्बाधक इत्याह—

पूर्वं यतोऽभिनिहितादुदात्तं दृश्यते पदम् ।
तत्र नीचोच्चनीचात्मा कम्पः कार्यो न सर्वथा ॥ ४९

अत्र सार्द्धत्रिमात्र उच्चारणे आदितः सार्द्धमात्रो नीचोऽन्त्यः स्पष्टोऽर्थः । यथा—रथानान्नये१रा: ॥ ४९ ॥

प्रकृते कि मेतावतायात मित्यत आह—

चतुर्विधाश्च स्वरिताः कम्पप्राप्ता निमित्ततः ।
अनुक्रमादिरूपायाञ्जटायां वाच्यतां गताः ॥ ५२

जात्यादिश्चतुर्विधाः स्वरिता येषां स्वरितोदात्तान्यतरप्रयुक्त-कम्पाः । चतुर्विधास्च अनुक्रमोत्क्रमव्युत्क्रमाभिक्रमरूपायां जटायां सति निमित्ते वाच्या इत्यर्थः । तथाहि क्षस्वजात्यो यथा—क्व१स्या स्याक्व१क्व१स्या ; स्या वः—अथ मनुक्रमाभिक्रमसंक्रमेषु प्रवृत्तः कम्पः । उत्क्रमव्युत्क्रमयोः क्षस्वजात्यो यथा—स स्व१ः स्व१: स स स्व१: । वरूथं तन्वे १ तन्वे१ वरूथं वरूथं तन्वे १—अयं व्युत्क्रमस्थो दीर्घजात्यः । यो३ह्यो३ह्योयोयो३ह्य३:—अय मव्युत्क्र-मस्थो दीर्घजात्यः । उत्क्रमोऽभिनिहितो यथा—मे अन्योऽन्यो मे मे अन्यः । व्युत्क्रमाभिक्रमयो रभिनिहितो यथा—अन्यः पच्चः पच्चोऽन्योऽन्यः पच्चः । अनुक्रमोत्क्रमसंक्रमेषूक्तो यथा—प्रच्चो३धो३ धः पच्चः पच्चो३धः । व्युत्क्रमाभिक्रमयोरप्युक्तो यथा—त्वं समुद्रियाः समुद्रियास्त्वं त्वं समुद्रियाः । समुद्रिया अपो ऽपः

समुद्रियाः समुद्रिया अपः । अपोऽग्रियोऽग्रियो३पोऽपोग्रियः । अनुक्रमसङ्क्रमयोः क्रस्वचैप्रो यथा—व्यर्यो३र्यो३विव्य१र्यः । अभिक्रममात्रे क्रस्वचैप्रो यथा—अभ्य२भिह्वि ह्यभ्य२भिह्वि । उत्क्रमव्युत्क्रमयोरप्युक्तो यथा—मय मभ्य१भ्य१य मय मभि । अभिक्रमे दीर्घचैप्रादिरपि यथा—क्तत्वेनास्वासु क्तत्वेन क्तत्वे मासु । आसु स्वासु स्वास्वास्वा३सुस्वासु । उत्क्रमे यथा—स्तवमान ऊत्यू१ती स्तवमान स्तवमान ऊती । उत्क्रमेऽप्युक्तो यथा—ऊर्ध्वा अभ्य१भ्यू१र्ध्वा ऊर्ध्वा अभि । व्युत्क्रमे प्रश्लिष्टो यथा—इदं वि वीद मिदं वि । इतो नावि नावी१त इतो नावि । अनुक्रमसंक्रमयोरप्युक्तो यथा—अभी३म मिम मभ्य१भी३मम् । —इत्यादि जटाकम्प्यास्तत्र तत्र द्रष्टव्याः ॥ ५० ॥

॥ इति जटानिरूपणं समाप्तम् ॥

---

॥ अथ माला निरूप्यते ॥

ब्रूयात् क्रमविपर्यासादर्धर्चस्यादितोऽन्ततः ।
अन्तं त्वादिं नयेदेवं क्रममालेति गीयते ॥ ५१

क्रमविपर्यासात् क्रमव्युत्क्रमाभ्या मर्द्धर्चस्यादितोऽन्ततो व्युत्क्रमोपक्रम मिति शेषः, ब्रूयात् । एवं क्रमविपर्यासाभ्यां क्रमं ब्रुवन् पुमान् अन्तत आदित आरभ्य, अन्त मन्तत आरब्धं क्रममादिं नयेत् समाप्तिं प्रापयेदित्यर्थः। यथा—अग्नि मीळे । ऋत्विजं देवम् । ऋत्विज मित्यृत्विजम् । ईळे पुरोहितम् । देवं यज्ञस्य। पुरोहितं यज्ञस्य। पुरोहित मिति पुरः ऽहितं । यज्ञस्य

पुरोहितं। यज्ञस्य देवं। पुरोहित मीड़े। पुरोहित मिति पुरः ऽहितम्। देव मृत्विजम्। ऋत्विजमित्यृत्विजम्। इड़ेऽग्निम्॥ ५१॥

॥ इति माला निरूपणं समाप्तम्॥

---

॥ अथ शिखा निरूप्यते॥

पदोत्तरां शिखा मेव जटा मार्याः प्रचक्षते॥ ५२

आर्याः पदोत्तरक्रमां सम्भिजटां शिखां प्रवदन्ति। यथा— अग्नि मीड़ ईड़ेऽग्नि मग्नि मीड़े पुरोहितम्। ईड़े पुरोहितं पुरोहित मीड़ ईड़े पुरोहितं यज्ञस्य। पुरोहितं यज्ञस्य यज्ञस्य पुरोहितं पुरोहितं, यज्ञस्य देवम्। पुरोहित मिति पुरः ऽहितम्। यज्ञस्य देवं देवं यज्ञस्य यज्ञस्य देव मृत्विजम्। देव-मृत्विज मृत्विजं देवं देव मृत्विजम्। ऋत्विज मित्यृत्विजम्॥५१॥

॥ इति शिखा निरूपणम्॥

---

॥ अथ रेखा निरूप्यते॥

क्रमाद्द्वित्रिचतुःपञ्चपदक्रम मुदाहरेत्।
पृथक् पृथक् विपर्यस्य रेखा माहुरनुक्रमात्॥५३

अनुक्रमात् द्वित्रिचतुःपञ्चपदक्रमं प्रत्येकं विपर्यस्य क्रमा-दुदाहरेत्; एव मुक्ता विकृतिनामतो रेखां प्रचक्षते महान्त आहुरित्यर्थः। यथा— श्रोतु नः नः श्रोतु श्रोतु नः। नः श्रोतु-

रातिः सुश्रोतुः । सुश्रोतुः श्रोतुराति नः । नः श्रोतुरातिः । श्रोतुरातिः सुश्रोतुः । श्रोतुरातिरिति श्रोतु ऽरातिः सुश्रोतुः । श्रोतुरातिः सुश्रोतुः सुचेत्रा सुश्रोतु रिति सुऽश्रोतुः सुचेत्रा सिन्धुः ऽसुचेचेति सुचेता । सुचेत्रा सिन्धुरद्भिः । अद्भिः सिन्धुः सुचेत्रा सुश्रोतुः । सुश्रोतुः सुचेत्रा । सुचेत्रा सिन्धुः । सिन्धु रद्भिः ; अद्भिरित्यत् ऽभिः ॥ सुषे सा वां वरुण मित्र । मित्र वरुण वां सा सुषे । सुषे सा । सा वां । वां वरुण । वरुण मित्र । इत्यादि ॥ ५२ ॥

॥ इति रेखा निरूपणम् ॥

---

॥ अथ ध्वजो निरूप्यते ॥

ब्रूयादादेः क्रमं सम्यगन्तायोच्चारयेदिति ।
वर्गे वा ऋचि वा यत्र पठितः स ध्वजः स्मृतः ॥ ५३

वर्गे वा ऋचि वा अस्तु, आदेः आदित आरभ्य समयक्रमं ब्रूयात् अन्ताय्यं क्रम मारभ्य सम्यगुच्चारयेत् ; एक मेकं पूर्वं पद मन्ताय अन्तादिक्रमपूर्व्यैं अनुक्रमेणाकर्षयेदित्यर्थः । इति यः पठितः स्यात्, स ध्वजः स्मृत इत्यर्थः । स यथा—प्र वः । भरध्वमिति भरध्वम् । वः पान्तम्, मीढुषे भरध्वम् । पान्तं रघुमन्यवः, रुद्राय मीढुषे । रघुमन्यवोऽन्धः, यज्ञं रुद्राय । अन्धो यज्ञम् । यज्ञं रुद्राय, रघुमनयवोऽन्धः । रुद्राय मीढुषे, पान्तं रघुमन्यवः । मीढुषे भरध्वं, वः पान्तम् । भरध्व मिति भरध्वम् ॥ ५३ ॥

॥ इति ध्वजो निरूपितः ॥

---

॥ अथ दण्डो निरूप्यते ॥

क्रम मुक्त्वा विपर्यस्य पुनश्च क्रम मुत्तरम् ।
अर्धर्चादेव मुक्त्वोक्तः क्रमदण्डोऽभिधीयते ॥ ५४ ॥

पुनश्च पुनरपि आदित आरभ्य क्रम मुच्चरेत् । एवं पूर्वार्द्धर्च-सम्बन्धेनोत्तरार्द्धर्चं क्रम मुक्त्वा पूर्वार्द्धर्चादिपदपर्यन्तं विपर्यासेन संहिता मुक्त्वा पुनस्तत आरभ्योत्तरार्द्धर्चस्थपदपर्यन्तं किंक्रमो वाच्य एवेत्यतो नेत्याह—अर्द्धर्चादिति । अर्द्धर्चपरिसमाप्तिपर्यन्त मेवायं नियमः ; उत्तरार्द्धर्चे तु पुनरारम्भ इति भावः । एव मुक्तप्रकारोऽयं तस्योक्त्या उच्चारणेन दण्डो नाम विकृतिविशेषो-ऽभिधीयते, विहितो भवति, उच्चारितो भवतीति यावत् । यथा — अग्निमीळे पुरोहितम् । अग्निम्, ईळे । अग्निमीळ ईळेऽग्नि मग्नि मीळे । पुरः हितम् । ईळे पुरोहितं पुरोहित मीळ ईळे पुरोहितम् । एवं सर्वत्र ॥ ५४ ॥

॥ इति दण्डो निरूपितः ॥

---

॥ अथ रथो निरूप्यते ॥

पादशोऽर्द्धर्चशो वापि सहोक्त्वा दण्डवद्रथः ॥ ५५

ऋचोर्द्धर्चयोः पादयोर्वा दण्डवत् संहितापदक्रमैः सहोक्त्या रथो विहितो भवतीत्यर्थः । सहोक्तिरेव रथ इति यावत् । यथा—अग्नि मीळे, अयं देवाय । ईळेऽग्निम्, जन्मने देवाय । एव मर्द्धर्चान्तम् ॥ ५५ ॥

॥ इति रथो निरूपितः ॥

---

॥ अथ घनो निरूप्यते ॥

## जटा मुक्त्वा विपर्यस्य घन माहुर्मनीषिणः ॥ ५६ ॥

प्र वो वः प्र प्र वः पान्त, पान्त वः प्र प्र वः पान्तम् । वः पान्त पान्त वो वः पान्त रघुमन्यवः ; रघुमन्यवः पान्त वः वः पान्त रघुमन्यवः । पान्त रघुमन्यवो रघुमन्यवः पान्त पान्त रघुमन्यवोऽन्धः, अन्धो रघुमन्यवः पान्त पान्त रघुमन्यवोऽन्धः । रघुमन्यवोऽन्धोऽन्धो रघुमन्यवो रघुमन्यवोऽन्धो यज्ञम ; यज्ञ मन्धो रघुमन्यवो रघुमन्यवोऽन्धो यज्ञम् । रघुमन्यव इति रघुऽमन्यवः । अन्धो यज्ञं यज्ञ मन्धोऽन्धो यज्ञं रुद्राय ; रुद्राय यज्ञ मन्धोऽन्धो यज्ञं रुद्राय । यज्ञं रुद्राय रुद्राय यज्ञं यज्ञं रुद्राय मीढुषे ; मीढुषे रुद्राय यज्ञं यज्ञं रुद्राय मीढुषे । रुद्राय मीढुषे मीढुषे रुद्राय रुद्राय मीढुषे भरध्वं ; भरध्वं मीढुषे रुद्राय रुद्राय मीढुषे भरध्वं । मीढुषे भरध्वं भरध्वं मीढुषे मीढुषे भरध्वम् । भरध्व मिति भरध्वम् ॥ ५६ ॥

॥ इति घनो निरूपितः ॥

## ॥ इत्यष्टविकृतिविवृतिः समाप्ता ॥